लोटः सेर्हिः स्यात्सोऽपिच्च ।

## १२०२ । अतो हेः । (६-४-१०५)

अतः परस्य हेर्लुक्स्यात् । भव—भवतात । भवतम् । भवत ।

## २२०३ । मेर्निः । (३-४-८९)

लोटो मेर्निः स्यात् ।

## २२०४ । आडुत्तमस्य पिच्च । (३-४-९२)

लोडुत्तमस्याडागमः स्यात्स पिच्च । हिन्योरुत्वं न । इकारोच्चारणसामर्थ्यात् । भवानि । भवाव । भवाम ।

## २२०५ । अनद्यतने लङ् । (३-२-१११)

**लोटस्सेरिति** । स्तुहीत्यादौ सिप्स्थानिकस्य हेः पित्वात् सार्वधातुकमपिदिति ङिद्वत्वाभावात् । गुणे प्राप्ते अपिद्वचनम् एवञ्च ङिद्वत्वात क्ङितिचेति गुणो न । सेर्हि ङिच्चेत्येव तु न सूत्रितम् । पितस्सिप अनुदात्तस्य स्थाने हेरप्यनुदात्तत्वापत्तेः । भव हि इति स्थिते । **अतो हेरिति** ॥ अत इति पञ्चमी । हेरिति षष्ठी । चिणो लुगित्यतो लुगित्यनुवर्तते । तदाह । **अतः परस्येति** । **भवेति** ॥ हिविधानन्तु स्तुहीत्याद्यर्थमिति भावः । **भवतादिति** ॥ आशिषि लोटः सिपि तस्य सेर्ह्यपिच्चेति हिभावे शपि गुणावादेशयोः अतो हेरिति लुकम्परत्वात् बाधित्वा तुह्योरिति पक्षे तातङिति भावः । **भवतमिति** ॥ थसि शपि गुणे अवादेशे च भव थस इति स्थिते लोटो लङ्वदिति लङ्वत्त्वात्तस्थस्थमिपामिति थसः तमादेशे रूपम् । एव । **भवतेति** ॥ थस्य तादेश इति विशेषः । लोटो मिपि शपि गुणे अवादेशे मिपः तस्थस्थमिपामित्यमादेशे प्राप्ते । **मेर्निरिति** ॥ लोटो लङ्वदित्यतः लोट इत्यनुवर्तते । तदाह । **लोटो मेरिति** ॥ भव नि इति स्थिते । **आडुत्तमस्येति** ॥ लोटो लङ्वदित्यतः लोट इत्यनुवर्तते । तदाह । **लोडुत्तमस्येति** ॥ स्तवानि स्तवावेत्यादौ सार्वधातुकमपिदिति ङित्त्वनिवृत्त्यर्थम् पिद्वचनं । यद्यपि मिप्स्थानिकस्य नेः पित्त्वात्तदागमस्यापि सिद्धं पित्त्व तथापि वसमसोराडागमस्याङित्त्वार्थम् पिदिति वचनम् । ननु स्तुहि भवानीत्यत्र एरुरित्युत्वं कुतो न स्यादित्यत आह । **हिन्योरुत्वमिति** । **सामर्थ्यादिति** ॥ अन्यथा हुनु इत्येव विदध्यादिति भावः । **भवानीति** ॥ आडागमे सवर्णदीर्घः । नचात्र लङ्वद्भावादितश्चेति लोपश्शङ्क्यः । इकारोच्चारणसामर्थ्यात् । अन्यथा मोन इत्येव विदध्यात । एवं हेरपि बोध्यं । यद्यपि भवानीत्यादावतो दीर्घो यञि इत्येव दीर्घसिद्धेराडागमविधिः व्यर्थः । तथाऽपि स्तवानीत्याद्यर्थमावश्यकमिहापि न्याय्यत्वादुपन्यस्तम् । **भवावेति** ॥ लोटो वस् गुणावादेशौ आडागमः सवर्णदीर्घः । लङ्वद्भावात् नित्यं ङित इति सकारलोपः । एवं मसि भवामेति रूप । **इति लोट प्रक्रिया** ॥ **अनद्यतन इति** ॥ भूतानद्यतन भूत

अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात्।

**२२०६। लुङ्लङ्लृङ्क्ष्वडुदात्तः (६-४-७१)**

एषु परेष्वङ्गस्याडागमः स्यात् सचोदात्त.।

**२२०७। इतश्च (३-४-१००)**

ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्यलोपः स्यात्। अभवत्। अभवताम्। अभवन्। अभवः। अभवतम्। अभवत। अभवम्। अभवाव। अभवाम।

**२२०८। विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्। (३-३-१६१)**

एष्वर्थेषु द्योत्येषु वाच्येषु वा लिङ् स्यात्। विधिः प्रेरणम्, भृत्यादेर्निकृष्टस्य

इति चाधिकृतम्। भूत इति धात्वर्थे अन्वेति। तदाह। **अनद्यतनभूतार्थवृत्तेरिति** ॥ **लुङ्लङिति** ॥ अङ्गस्येत्यधिकृतम्। तदाह। **एषु परेषु अंगस्येति** ॥ अन्तरङ्गत्वात् नित्यत्वातपरत्वाच्च यथायथ तिपि शपि विकरणे गुणे अवादेशे विकरणविशिष्टस्याङ्गस्य अडागमः। लावस्थायामेवाडागम इति तु पक्षान्तर भाष्ये स्थितम्। **इतश्चेति** ॥ लस्येत्याधिकृतम्। इतश्च लोप परस्मैपदेष्वित्यस्मात् लोप इति परस्मैपदेष्विति चानुवर्तते। परस्मैपदेष्वित्येतत् षष्ठ्या विपरिणम्यते। तदाह। **ङितो लस्येत्यादिना** ॥ अलोऽन्त्यस्येत्यन्त्यस्य लोप। तदाह। **अभवदिति। अभवतामिति** ॥ लङस्तस. तामादेश शप् गुणावादेशौ अट्। **अभवन्निति** ॥ झेरन्तादेशः। शप गुणावादेशौ। अट् इतश्चेति इकारलोपः। तकारस्य सयोगान्तलोपः। **अभव इति**। सिपि शपि गुणे अवादेशे अटि इकारलोपे रुत्वविसर्गौ। **अभवतमिति** ॥ थसस्तमादेशः। शप गुणावादेशे अट्। **अभवतेति** ॥ थस्य तादेशे शपि गुणे अवादेशे अटि। **अभवमिति** ॥ मिप अमादेशे शपि गुणे अवादेशे पूर्वरूपम्। **अभवावेति** ॥ वसि शपि गुणावादेशौ। अट् अतो दीर्घो यञीति दीर्घ। नित्यङ्कित इति सकारलोप.। एव मसि अभवामेति रूपम्। **इति लङ् प्रक्रिया** ॥ **विधिनिमन्त्रणेति** ॥ ननु विध्यादयो हि न लिङो वाच्याः। लः कर्मणि च भावे चेति सूत्रेण कर्तृकर्मभावानां लकारवाच्यत्वबोधनात्। नच लः कर्मणि चेति शास्त्र लिङ्व्यतिरिक्तलकारविषयकमेवास्त्विति वाच्यम्। तथा सति यजेतेत्यादौ कर्तृवाचकत्वाभावेन शबाद्यनापत्तेरित्यत आह। **द्योत्येष्विति** ॥ ल. कर्मणि चेति सूत्रं सामान्यविषयश्चेदपि विधिनिमन्त्रणेति विशेषशास्त्रेण न बाध्यते। अविरोधात्। तथाच विध्यादिविशिष्टकर्त्रादिषु लिङिति फलतीति मत्वाह। **वाच्येषु वेति** ॥ पक्षद्वयमपीद भाष्ये स्थितम्। विधिः प्रेरणमिति भाष्यम्। अर्थतस्सगृह्णाति। **विधिः प्रेरणमिति** ॥ ननु निमन्त्रणादीनामपि प्रेरणान्तर्भावात्पौनरुक्त्यमित्यतो व्याचष्टे। **भृत्यादेर्निकृष्टस्य प्रवर्तनमिति**। तद्यथा भृत्य स्वामी वदति। भवान् वस्त्र क्षालयेदिति। आमन्त्रणात् भेद दर्शयितु

प्रवर्तनम् । निमन्त्रणं नियोगकरणम् । आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्यापारः । 'प्रवर्तनायां लिङ्' इत्येव सुवचम् । चतुर्णां पृथगुपादानं प्रपञ्चार्थम् ।

## २२०९ । यासुट् परस्मैपदेषूदात्तो ङिच्च । (३-४-१०३)

लिङः परस्मैपदानां यासुडागमस्स्यात्स चोदात्तो ङिच्च । ङिन्त्वोक्तेर्ज्ञायते क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेधः' इति । आदेशस्य स्थानिवद्भावेन ङित्त्वमपीह लिङ्गम् ।

निमन्त्रणशब्दं व्याचष्टे । **निमन्त्रणं नियोगकरणमिति** ॥ नियोगशब्दस्य प्रेरणशब्द-पर्यायत्वभ्रमं वारयति । **आवश्यके श्राद्धादौ दौहित्रादेः प्रवर्तनमिति** ॥ त्रीणि श्राद्धे पवित्राणि दौहित्रं कुतपस्तिलः, इत्यादि वचनादिति भावः । तद्यथा दौहित्रादीन् प्रति इह श्राद्धे भवान् भुञ्जीतेति । **आमन्त्रणं कामचारानुज्ञेति** ॥ अथेच्छ क्रियतामित्यभ्यनुज्ञान-मित्यर्थः । **अधीष्टः सत्कारपूर्वको व्यापार इति** ॥ भाष्यवाक्यमिदम् । सत्कृत्य-प्रवर्तनमित्यर्थः । अधिपूर्वकस्येषधातोर्भावे क्तान्तस्योपसर्गवशादस्मिन्नर्थे वृत्तिः । अत एव भाष्यप्रयोगादधीष्टशब्दस्य पुंस्त्वम् । अधीष्टमित्येव क्वचित्पाठः । माणवकं भवानध्यापये-दित्युदाहरणम् । इदं कार्यं नवेति विचार्य निर्धारणम् सम्प्रश्नः । यथा । किम्भोः व्याकरणं भवानधीयीतेति । प्रार्थनं याच्ञा । यथा । भवानन्नं मे दद्यादिति । **सुवचमिति** ॥ प्रवर्त-नात्वस्य विध्यादिचतुर्षु अनुस्यूतत्वादिति भावः । प्रवृत्त्यनुकूलव्यापारः प्रवर्तना । तत्र प्रवृत्तिः शिष्यादिनिष्ठा । तदनुकूलव्यापारस्तु प्रेरणात्मकः प्रवर्तयितृगुर्वादिनिष्ठः । विस्तरस्तु मञ्जू-षायां द्रष्टव्यः । **चतुर्णामिति** ॥ विधिनिमन्त्रणामन्त्रणाधीष्टानामित्यर्थः । अथ लिङस्तिपि इतश्चेतीकारलोपे शपि गुणे अवादेशे भवत् इति स्थिते । **यासुडिति** ॥ लिङ सीयुडित्यतः लिङ इत्यनुवर्तते । षष्ठ्यर्थे सप्तमी । तदाह । **लिङः परस्मै-पदानामिति** ॥ सीयुटोऽपवादः । यासुटि टकार इत् । उकार उच्चारणार्थः । टित्वात् तिबादीनामाद्यवयवः । अवयवे ङित्वञ्च आनर्थक्यात्तदङ्गन्यायेन समुदाये आगम-विशिष्टतिबादौ विश्राम्यति । आगमा अनुदात्ता इति यासुटः अनुदात्तत्वे प्राप्ते उदात्तवचनम् । इदमेव वचनमागमा अनुदात्ता इत्यत्र ज्ञापकमिति भाष्यम् । स्नुयात् स्नुयातामित्यादौ गुणादिनिषेधार्थं यासुटो ङित्ववचनम् । ननु यदागमा इति न्यायेन यासुडागमो लिङादेश-परस्मैपदावयवः । ततश्च स्थानिवत्त्वेनैव ङित्त्वसिद्धेः यासुटो ङित्वविधिर्व्यर्थः । न च स्थानिभूतलिङो ङकारस्याल इत्त्वेन गुणनिषेधविधावाश्रयणादनल्विधाविति निषेधदशङ्क्यः । घुमास्थागापाजहातिसां हलीति क्ङिति विहितस्य ईत्वस्य नल्यपीति निषेधेन लिङ्गानानुबन्धकार्ये अनल्विधाविति निषेधाभावज्ञापनादित्यत आह । **ङित्वोक्तेरिति । क्वचिदनुबन्धकार्येऽपि अनल्विधाविति निषेध इति** ॥ यासुटो ङित्वेन ज्ञायत इत्यन्वयः । तथा च एतद्ज्ञापनार्थ-

## २२१० । सुट् तिथोः । ( ३-४-१०७ )

**लिङस्तकारथकारयोः सुट् स्यात् । सुटा यासुट् न बाध्यते । लिङो यासुट् तकारथकारयोः सुडिति विषयभेदात् ।**

## २२११ । लिङः सलोपोऽनन्त्यस्य । ( ७-२-७९ )

**सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् । इति सकारद्वयस्यापि निवृत्तिः । सुटः श्रवणं त्वाशीर्लिङि । स्फुटतरं तु तत्रात्मनेपदे ।**

मेव यासुटो ङित्वमिति भाव । ज्ञापनफलन्तु वक्ष्यमाणेत्यत्र ङीबभाव । अन्यथा लृडादेशस्य शानच· स्थानिवत्त्वेन टित्वात् ङीप् स्यात् । ननु क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेध इत्यत्र यासुटो ङित्ववचन न ज्ञापकम् । अनुबन्धकार्ये सर्वत्र अनल्विधाविति निषेधाभावे सत्यपि यासुटो ङित्वस्य तिप्सिप्मिबागमयासुटो ङित्त्वार्थमावश्यकत्वात् । नहि लिडादेशत्वेऽपि तिप्सिप्मिपां ङित्त्व स्थानिवत्वलभ्यम् । हलश्श्नश्शानज्झाविति सूत्रभाष्ये ङिच्च पिन्न पिच्च ङिन्नेति प्रपञ्चितत्वादित्यस्वरसादाह । **श्नश्शानचः शित्वमपीह लिंगमिति** ॥ इह अनुबन्धकार्येऽपि क्वचिदनल्विधाविति निषेधोऽस्तीत्यस्मिन्नर्थे श्न श्नाप्रत्ययस्य यः शानजादेशः हलःश्नश्शानज्झाविति विहितः तस्य शित्वमपि लिङ्गम् । ज्ञापकमित्यर्थ । अन्यथा स्थानिवत्वेनैव तस्य शित्त्वसिद्धेस्तद्वचन व्यर्थ स्यादिति भाव । अत्र च यद्वक्तव्यन्तत् स्त्रीप्रत्ययनिरूपणे वक्ष्यमाणेत्यत्र प्रपञ्चितम् । तथा च प्रकृते भव यास् त इति स्थिते । **सुडिति** ॥ लिङस्सीयुडित्यत लिङ इत्यनुवर्तते । तिश्च थश्चेति द्वन्द्वात् षष्ठीद्विवचनम् । इकार उच्चारणार्थः । तदाह । **लिङस्तकारेति** ॥ सुटि टकार इत् उकार उच्चारणार्थः । भव याम स त् इति स्थितम् । नन्विह परेण सुटा यासुट· कथन्न बाधः । भवेयुरित्यादौ परस्मैपदेषु यासुड्विधेः चरितार्थत्वादित्याशङ्क्य निराकरोति । **सुटा यासुट् न बाध्यत इति** ॥ तत् कुत इत्यत आह । **लिङो यासुट् इति** । लिङस्सीयुट यासुडागमश्च । लिडादेशैकदेशस्य तकारस्य सुडागम इति विषयभेदादित्यर्थः । तथा च यौगपद्यासम्भवात् विप्रतिषेधाभावान्न परेणापि सुटा यासुटो बाध इति भाव । **लिङ इति** ॥ सेति लुप्तषष्ठीक पदम । रुदादिभ्यस्सार्वधातुक इत्यतस्सार्वधातुक इत्यनुवृत्तम् षष्ठ्या विपरिणम्यते । तदाह । **सार्वधातुकलिङ इति । सकारद्वयस्यापीति** ॥ अविशेषात् सकारद्वयस्यापि युगपल्लोप प्रवर्तते । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरिति तु पर्यायेण पुन· प्रवृत्तिनिवृत्तिपरमिति भाव· । यद्यपि भव यास् स् त् इत्यत्र स्कोरित्येव सिद्ध्यति । तथापि भवेयुरित्याद्यर्थ सूत्रम । ननु सुटो लोपे किमर्थस्सुड्विधिरित्यत आह । **सुटः श्रवणन्त्वाशीर्लिङीति** ॥ भूयास्तामित्यादौ लिङाशिषीत्यार्धधातुकत्वेन तत्र सकारलोपस्याप्रसक्तेरिति भावः । व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषाभाव इति भाष्यादाह । **स्फुटतरन्त्विति** ॥ तत्रापि आशिषि लिङ्यपि एधिषीष्टेत्यादावात्मने पदे स्फुटतरं सकारद्वयस्य श्रवणमित्यर्थः । तत्र यासुट· अभावेन सलोपाभावेन च सुट एव सकारस्य पृथक् स्पष्ट श्रवण-

## २२१२ । अतो येयः । (७-२-८०)

**अतः परस्य सार्वधातुकावयवस्य 'या' इत्यस्य इय् स्यात् । गुणः । यलोपः । भवेत् । 'सार्वधातुक—' इति किम् । चिकीर्ष्यात् । मध्येऽपवादन्यायेन हि अतो लोप एव बाध्येत । भवेदित्यादौ तु परत्वाद्दीर्घः स्यात् । भवेताम् ।**

सम्भवादिति भावः। तथाच भव यात इति स्थिते । **अत इति** ॥ या इति लुप्तषष्ठीक पदम् । अत इति पञ्चमी। परस्येत्यध्याहार्यम् । इय इत्यत्राकार उच्चारणार्थः । रुदादिभ्य इत्यस्मात् सार्वधातुक इत्यनुवृत्तम् अवयवषष्ठ्या विपरिणम्यते । तदाह । **अतः परस्येत्यादिना** ॥ भव इय त इति स्थितम् । **गुण इति** ॥ आद्गुण इत्यनेनेति शेषः । भवेय त् इति स्थितम् । **यलोप इति** ॥ लोपो व्योरित्यनेनेति शेषः । **भवेदिति** ॥ यलोपात् प्राक् हल्ङ्यादिलोपस्संयोगान्तलोपश्च न शङ्क्यः । अन्तरङ्गत्वेन यलोपस्य पूर्वम्प्रवृत्ते. संयोगान्तलोपस्य त्रैपादिकत्वेनासिद्धत्वाच्चेति भावः । **सार्वधातुके किमिति** ॥ रुदादिभ्य इत्यतस्सार्वधातुक इत्यनुवृत्तिलभ्य सार्वधातुकावयवस्येति किमर्थमित्यर्थः । भूयादित्यादावाशीर्लिङि आर्धधातुके अतः परत्वाभावादेव इयादेशाभावसिद्धेः सार्वधातुकग्रहणानुवृत्तिर्व्यर्थेत्याशयः । **चिकीर्ष्यादिति** ॥ कृञ्धातोस्सन्नन्तात आशीर्लिङि तिबादौ चिकीर्ष यादिति स्थिते अतो लोप इत्यकारलोपे चिकीर्ष्यादिति रूपम् । तत्र अतो येय इत्यत्र सार्वधातुकग्रहणाननुवृत्तौ चिकीर्षयादिति स्थिते अतो येय इति इयादेशे आद्गुणे यलोपे चिकीर्षेदिति स्यात् । सार्वधातुकग्रहणानुवृत्तौ तु न दोषः । आशीर्लिङादेशस्य तिङः लिङाशिषीत्यार्धधातुकतायाः वक्ष्यमाणत्वादिति भावः । ननु आशिषि लिङि चिकीर्षयादिति स्थिते नित्यत्वात् अतो लोप इति अकारलोपे सति अतः परत्वाभावादेव अतो येय इत्यस्याप्रवृत्तेः तत्र सार्वधातुकग्रहणानुवृत्तिर्व्यर्थैवेत्यत आह । **मध्येऽपवादन्यायेन ह्यतो लोप एव बाध्येतेति** ॥ षष्ठस्य चतुर्थपादे अतो लोप इति सूत्रम् । सप्तमस्य द्वितीयपादे अतो येयेति सूत्रम् । सप्तमस्य चतुर्थपादे तु अतो दीर्घो यञीति सूत्रमिति स्थितिः । तत्र आशीर्लिङि आर्धधातुके चिकीर्षयादित्यत्राल्लोपप्राप्त्या विधिलिङि तु भवयादित्यत्र अतो दीर्घप्राप्त्या च इयादेशस्य निरवकाशत्वेन बाध्यसामान्यचिन्तामाश्रित्यापवादतया तेन अन्यतरस्मिन् बाध्ये सति मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरानिति न्यायेनातो लोप एव बाध्यमर्हति । न तु अतो दीर्घ इत्यर्थः । एवञ्चार्धधातुके चिकीर्षयादिति स्थिते अतः परत्वादियादेशः प्रसज्येतेत्यतिव्याप्तिस्स्यादिति स्थितम् । एवञ्चाव्याप्तिरपीत्याह । **भवेदित्यादाविति** ॥ अतः परस्य इयादेशविधौ सार्वधातुकग्रहणाननुवृत्तौ विधिलिङस्तिपि सार्वधातुके भव यादिति स्थिते इयादेशम्परत्वात् बाधित्वा अतो दीर्घो यञीति यञादौ सार्वधातुके परे अतो विधीयमानो दीर्घस्स्यात् । ततश्च अतः परत्वाभावादियादेशो न स्यादित्यव्याप्तिस्स्यादित्यर्थः । नच इयादेशस्य निरवकाशत्वात् दीर्घबाधकत्वं शङ्क्यम् । चिकीर्ष्यादित्यार्धधातुके दीर्घप्राप्त्ययोग्ये इयादेशस्य सावकाशत्वादिति भावः । **भवेतामिति** ॥ तसस्तामादेशे शपि गुणे अवादेशे यामुडागमे सुटि सकारद्वयलोपे या

## २२१३। झेर्जुस्। (३-४-१०८)

लिङो झेर्जुस् स्यात्। ज इत्।

## २२१४। उस्यपदान्तात्। (६-१-९६)

अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात्। इति प्राप्ते। परत्वान्नित्यत्वाच्च 'अतो येयः' (२२१२) इति प्राञ्चः। यद्यप्यन्तरङ्गत्वात्पररूपं न्याय्यं। तथाति 'यास्' इत्येतस्य 'इय्' इति व्याख्येयम्। एवं च सलोपस्यापवाद

---

इत्यस्य इयादेशे आद्गुणे यलोपः। अथ लिङो झेर्झोन्त इति प्राप्ते। **झेर्जुसिति**॥ लिङस्सीयुडित्यतो लिङ इत्यनुवर्तते। तदाह। **लिङो झेरिति**॥ अनेकाल्त्वात्सर्वादेशः। **ज इदिति**॥ जुसः स्थानिवत्त्वेन प्रत्ययत्वात् चुटू इति जकार इत्संज्ञक इत्यर्थः। उसि शपि गुणे अवादेशे यासुटि सकारलोपे भव या उसिति स्थिते इयादेश बाधित्वा पररूप प्रवृत्तिं शङ्कितुमाह। **उसीति**॥ एकः पूर्वपरयोरित्यधिकृतम्। आद्गुण इत्यस्मादादित्यनुवर्तते। एङि पररूपमित्यस्मात्पररूपमिति। तदाह। **अवर्णादुसीति**॥ उसि य. अच् उकारः तस्मिन् परत इत्यर्थ। इको यणचीत्यत. अचीत्यनुवृत्तेः। यद्यपि उस. कृत्स्नस्याकारस्य च उसित्येकादेशेऽपि रूपन्तुल्यम्। तथापि अकस्सवर्णे दीर्घ इत्यादावुत्तरत्राचीत्यावश्यकमत्वाप्यनुवर्तत इति बोद्धयम्। भिन्द्युरित्याद्युदाहरणम्। **इति प्राप्त इति**॥ भव या उसित्यत्राकारस्योकारस्यचाद्गुणम्बाधित्वा एकस्मिन्नुकारे पररूपे प्राप्ते सतीत्यर्थः। सति च पररूपे पा इत्यस्याभावात् इय् न स्यादिति मन्यते। **परत्वादिति**॥ पररूपापेक्षया इयादेशः परः नित्यश्च। अकृते कृते च पररूपे प्रवृत्ते। कृते पररूपे य् इत्यस्यैकदेशविकृतन्यायेन एकादेशस्य पूर्वान्तवत्त्वेन वा इयादेशस्य निर्बाधत्वात्। ततश्च पररूपम्बाधित्वा इयादेशे भवेयुरिति रूपमिति प्राचीनाः मन्यन्त इत्यर्थः। ननु पररूपमङ्गाधिकारस्थत्वाभावात् अङ्गानपेक्षत्वात् अन्तरङ्गं। इयादेशस्तु आङ्गत्वात् प्रकृतिप्रत्ययोभयसापेक्षत्वात् बहिरङ्गम्। ततश्च परान्नित्यादपीयादेशात् पररूपस्यान्तरङ्गतया बलवत्त्वात् पररूपमेव इह स्यादिति शङ्कते। **यद्यपीति**॥ परिहरति। **तथापीति**॥ अतः यास् इयः इति पदच्छेद.। यासिति लुप्तषष्ठीकं पदम्। ततश्च अतः परस्य यासित्येतस्य इय् स्यादिति व्याख्येयमित्यर्थः। ननु लिङस्सलोपोऽनन्त्यस्येति सकारस्य लोपः इयादेशम्बाधित्वा नित्यत्वात् प्राप्नोतीति ततश्च यास् इत्यस्य इय् इति कथमित्यत आह। **एवञ्चेति**॥ यासिति सकारान्तस्य इयादेशविधिसामर्थ्यादेव सकारलोप बाधित्वा प्रागेव यासिति सकारान्तस्य इयादेशो भवतीत्यर्थः। तथा च सकारावस्थायां अवर्णात्परत्वाभावेन पररूपस्याप्रवृत्तिरिति भावः। ननु यदि या स् इयः इति च्छेदः, तदा सकारस्य रुत्वे, भोभगो इति यत्वे, लोपश्शाकल्यस्येति तस्य लोपे, अतो या इय. इति स्यात्। आद्गुणे कर्तव्ये यलोपस्यासिद्धत्वादित्यत आह।

इय्। 'अतो येयः' (२२१२) इत्यत्र तु सन्धिरार्षः। भवेयुः। भवेः। भवेतम्। भवेत। भवेयम्। भवेव। भवेम।

### २२१५। लिङाशिषि। (३-४-११६)

आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात्।

### २२१६। किदाशिषि। (३-४-१०४)

आशिषि लिङो यासुट् कित्स्यात्। 'स्कोः—' (३८०) इति सलोपः।

### २२१७। क्ङिति च। (१-१-५)

**सन्धिरार्ष इति**। आनेमुगिति सूत्रे भाष्ये तु अतो या इय इत्येव सूत्रपाठो लक्ष्यते। **भवेरिति**॥ सिपि, शपि, गुणः। अवादेशः। इतश्चेति इकारलोपः। यासुडागमः। सकारद्वयस्य लोपः। इयादेशः। आद्गुणः। यलोपः। रुत्वविसर्गौ। एवं थसः तमादेशे थस्य तादेशे च, भवेतम्। भवेतेति च रूपम्। **भवेयमिति**॥ मिपि अमादेशः। शप्। गुणः। अवादेशः। यासुट्। सलोपः। इयादेशः। आद्गुणः। **भवेवेति**॥ वस् शप् गुणावादेशौ। नित्यङ्कित इति सकारलोपः। यासुट्। सलोपः। इयादेशः। आद्गुणः यलोपः। एवं मसि भवेमेति रूपम्। **इति विधिलिङ्प्रक्रिया**॥ **अथाशीर्लिङि विशेषमाह। लिङाशिषीति**॥ लिङिति लुप्तषष्ठीकं पदम्। तिङ्शित्सार्वधातुकमित्यतस्तिङित्यनुवर्तते। तदाह। **आशिषिलिङस्तिङिति**। सार्वधातुकसंज्ञापवादोऽयम्। ततश्च सार्वधातुकसंज्ञाकार्यं शबादि न भवति। **किदाशिषीति**॥ लिङस्सीयुडित्यत लिङ इत्यनुवर्तते। यासुट् परस्मैपदेष्वित्यत यासुडिति च। तदाह। **आशिषि लिङ इति**॥ यासुट् परस्मैपदेष्विति ङित्वस्यापवादः। यद्यपि ङित्त्वेनैव गुणनिषेधस्सिध्यति। तथापि इज्यादित्यादौ वचिस्वपियजादीनां कितीति सम्प्रसारणार्थं कित्वमावश्यकम् इह न्याय्यत्वादुपन्यस्तम्। अथ आशिषि लिङस्तिपि आर्धधातुकत्वात् शबभावे इतश्चेतीकारलोपे यासुडागमे अतः परत्वाभावात् सार्वधातुकत्वाभावाच्च इयादेशाभावे सुटि भूयास् स् त् इति स्थिते प्रक्रियामाह। **स्कोरिति। सलोप इति**॥ लिङस्सलोप इत्यस्य सार्वधातुकविषयत्वात् स्कोरिति सुटः पदान्तसयोगादित्वात् लोपः। ततः यासुटस्सस्यापि पदान्तसंयोगादित्वादेव लोपः। न तु झल्परसयोगादित्वेन यासुटस्सस्य लोपे सुटः सस्य पदान्तसंयोगादित्वाल्लोप इति युक्तम्। तथासति झल्परसंयोगादिलोपस्यासिद्धत्वेन सयोगान्तलोपापत्तेः। भ्रष्ट इत्यादौ सावकाशस्य झल्परसंयोगादिलोपस्य संयोगान्तलोपाबाधकत्वादिति शब्दरत्ने विस्तरः। एवं च भूयास् स् त् इति स्थिते सकारद्वयस्य निवृत्तौ भूयादिति रूपम्। तत्र सार्वधातुकार्धधातुकयोरिति गुणे प्राप्ते। **क्ङिति चेति**॥ ग्क्ङ् एषां समाहारद्वन्द्वः कात्पूर्वं गकारस्य चर्त्वेन निर्देशात् ग्क्ङ् च इत् यस्येति विग्रहः। द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकमन्वेति। तथा च गिति किति

गित्किन्ङिन्निमित्त इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ।

## २२१८ । लुङ् । (३-२-११०)

भूतार्थवृत्तेर्धातोर्लुङ् स्यात् ।

## २२१९ । माङि लुङ् । (३-३-१७५)

सर्वलकारापवादः ।

ङिति चेति लभ्यते । निमित्तसप्तम्येषा । इको गुणवृद्धी इत्यनुवर्तते । चकार इत्यर्थे । इक इत्युच्चार्य विहिते इति लभ्यते । न धातुलोप आर्धधातुक इत्यतः नेत्यनुवर्तते । तदाह । **गित्किन्ङिन्निमित्ते इत्यादिना** ॥ गितीत्यनुक्तौ तु ग्लाजिस्थश्च ग्स्नुरिति ग्स्नुप्रत्यये जिष्णुरित्यत्र गुणनिषेधो न स्यात् । न च ग्स्नुप्रत्ययः किदेव क्रियतामिति वाच्यम् । तथा सति घुमास्थेति किति विहितस्य ईत्वस्य प्रसङ्गात् । यदि तु गिति किति ङिति परतो गुणवृद्धी न स्त इति व्याख्यायेत, तदा च्छिन्नं भिन्नमित्यत्र क्तप्रत्यये परे लघूपधगुणनिषेधो न स्यात् । स्थानिभूतस्येक हला व्यवधानात् । नच येननाव्यवधानन्यायश्शङ्क्य । चितस्तुतमित्यादावव्यवहिते चरितार्थत्वात् । यदि च इको न गुणवृद्धी इत्येव व्याख्यायेत न त्विग्लक्षणे इति, तदा लिगोरपत्यं लैगवायन, नडादित्वात् फक्, इह आदिवृद्धेरोर्गुणस्य च वस्तुगत्या इक्स्थानिकत्वात् निषेधस्स्यादित्यलम् । **भूयादिति** ॥ इहार्धधातुकत्वाल्लिङस्सलोप इत्यस्याप्रवृत्तेः स्कोरिति सलोप इत्युक्तम् न विस्मर्तव्यम् । न चैवमपि सयोगादिलोपस्यासिद्धत्वाद्धल्ङ्याब्भ्यो दीर्घादिलोपः स्यादिति वाच्यम् । सुटि यासुटि च सति ताभ्यां विशिष्टस्यैव प्रत्ययत्वेनापृक्तत्वाभावादित्यलम् । **भूयास्तामिति** ॥ आशिषि लिङस्तसस्तामादेशे आर्धधातुकत्वात् शबभावे यासुडागमे अतः परत्वाभावादियादेशाभावे सुटि झल्परसयोगादित्वेन यासुटस्सकारस्य लोपः गुणनिषेधश्च । **भूयासुरिति** ॥ झेर्जुसि यासुडागमे गुणनिषेधे रूपम् । **भूया इति** ॥ आशीर्लिङस्सिपि इतश्चेतीकारलोपः यासुटः स्कोरिति सलोपः, गुणनिषेधः, रुत्वविसर्गौ । **भूयास्तमिति** ॥ थसस्तमादेशे यासुटि गुणनिषेधः । एव थस्य तादेशेऽपि भूयास्तेति रूपम् । **भूयासमिति** ॥ मिपः अमादेशे यासुटि गुणनिषेधः । **भूयास्वेति** ॥ लिङो वस् नित्यं ङित इति सकारलोपः । यासुट् । गुणनिषेधः । एव मसि भूयास्मेति रूपम् । **इत्याशीर्लिङ् प्रक्रिया । लुङिति** ॥ धातोरिति भूत इति चाधिकृतम् । तदाह । **भूतार्थवृत्तेरिति । माङि लुङिति** ॥ माङि प्रयुज्यमाने धातोर्लुङ् स्यादित्यर्थः । ननु लुङ् इत्युदाहृतसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह । **सर्वलकारापवाद इति** ॥ मास्त्वित्यादौ तु मा इत्यव्ययान्तर प्रतिषेधार्थकमित्याहुः । आङ् माङोश्चेति सूत्रभाष्ये तु ङितो माशब्दस्य निर्देशात् प्रमाच्छन्द इत्यत्र न भवतीत्युक्तम् । माशब्दस्याव्ययान्तरस्य सत्त्वे तु तदेवोदाह्रियेत । मास्त्वित्यत्र

## २२२० । स्मोत्तरे लङ् च । (३-३-१७६)

स्मोत्तरे माङि लङ् स्याल्लुङ् च ।

## २२२१ । च्लि लुङि (३-१-४३)

शबाद्यपवादः ।

## २२२२ । च्लेः सिच् । (३-१-४४)

इचावितौ ।

## २२२३ । गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । (२-४-७७)

एभ्यः सिचो लुक्स्यात् । गापाविहेणादेशपिबती गृह्येते ।

## २२२४ । भूसुवोस्तिङि । (७-३-८८)

'भू' 'सू' एतयोः सार्वधातुके तिङि परे गुणो न स्यात् ।

## २२२५ । अस्तिसिचोऽपृक्ते । (७-३-९६)

तु अस्त्विति विभक्तिप्रतिरूपकमव्ययमित्यन्ये । **स्मोत्तर इति** ॥ चकारात् माङि लुङित्यनुकृष्यते । स्म इत्यव्ययं उत्तर यस्मादिति विग्रहः । तदाह । **स्मोत्तरे माङीति** ॥ अयमपि सर्वलकारापवादः । **च्लिलुङीति** ॥ च्लि इति लुप्तप्रथमाक लुङि परे धातोः च्लिप्रत्ययः स्यादित्यर्थः । **शबाद्यपवाद इति** ॥ आदिना श्यनादिविकरणसङ्ग्रहः । **च्लेस्सिजिति** । **इताविति** ॥ चित् स्वराश्चित्त्वस्य प्रयोजन । इदित्त्वस्य तु अमस्तेत्यत्र अनिदिता हल उपधाया क्ङितीत्युपधालोपस्याप्रवृत्तिः प्रयोजनम् । **गातिस्थेति** ॥ गाति स्था घु पा भू एषा द्वन्द्वात पञ्चमीबहुवचनम् । परस्मैति शेषः । सिच इति षष्ठी । गातीति श्तिपा निर्देशात् गाधातोर्ग्रहणम् । घु इत्यनेन दाधाघ्वदाबिति घुसंज्ञकयोः दाधातोर्धाधातोश्च ग्रहणम् । ण्यक्षत्रियार्षञितो यूनिलुगणिञोरित्यस्माद्व्यवहितादपि लुगित्यनुवर्तते । जुहोत्यादिभ्यः श्लुरित्यव्यवहितमपि श्लुग्रहणं नानुवर्तते । व्याख्यानात् । तदाह । **एभ्यास्सिच इत्यादिना** । **गापाविहेति** ॥ इह गातिस्थेति सूत्रे गातीत्यनेन पाग्रहणेन च इणो गाल्लुङीति लुग्विकरणस्येणो गादेशः शब्विकरणः पिबादेशयोग्यः पाधातुश्च गृह्येते इत्यर्थः । गापोर्ग्रहणे इण्पिबत्योर्ग्रहणमिति भाष्यादिति भावः । तथाच लुङस्तिबादेशे इतश्चेति इकारलोपे शबपवादे च्लिप्रत्यये तस्य सिचि तस्य लुकि अडागमे अभूत् इति स्थिते पित्त्वात् ङित्त्वाभावे सार्वधातुकार्धधातुकयोरिति गुणे प्राप्ते । **भूसुवोरिति** ॥ मिदेर्गुण इत्यतो गुण इति, नाभ्यस्तस्याचि पितीत्यतो नेति सार्वधातुक इति चानुवर्तते । तदाह । **एतयोरिति** ॥ भू सू इत्यनयोरित्यर्थः । इह षूङ् प्राणिगर्भविमोचन इति लुग्विकरणस्थस्यैव ग्रहणम् । न तु सुवति सूयत्योश्शविकरणश्यन्विकरणयोरपि । तत्र तिङो विकरणेन व्यवधानात् । अथ अभूत् इत्यत्र तकारस्येडागममाशङ्कितुमाह । **अस्ति सिच इति** ॥ अस्तिश्च सिच्चेति समाहारद्व-

'सिच्' च 'अस्' चेति समाहारद्वन्द्वः। सिच्छब्दस्य सौत्रं भत्वम्। अस्तीत्यव्ययेन कर्मधारयः। ततः पञ्चम्याः सौत्रो लुक्। विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तहल ईडागमः स्यात्। इति ईट् न। इह सिचो लुप्तत्वात्। अभूत्। 'हलः' किम् ऐधिषि। 'अपृक्तस्य' इति किम्। ऐधिष्ट। अभूताम्।

## २२२६। सिजभ्यस्तविदिभ्यश्च। (३-४-१०९)

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् स्यात्। इति प्राप्ते।

## २२२७। आतः। (३-४-११०)

---

न्द्वात् पञ्चमी। ब्रुव ईडित्यत ईडित्यनुवर्तते। तस्मादित्युत्तरस्येति परिभाषया पञ्चमी। अपृक्तस्येति षष्ठीं प्रकल्पयति। ततश्च अस्तेस्सिचश्च परस्यापृक्तस्य ईडागमस्स्यादिति प्राचीना व्याचक्षते। तथा सति लुङि अस्तेर्भूभावे अभूदिति न स्यात्। भूभावस्य स्थानिवत्त्वेन अस्तितया तत्रापृक्तस्य हल ईडागमस्य दुर्वारत्वात्। तथा अगात् अस्थात् अपादित्यादावपि गातिस्थेति सिचो लुक्यपि स्थानिवत्त्वेन सिच. परत्वादीडागमस्स्यात्। अत· प्रकारान्तरेण व्याचष्टे। **सिच्च अस् चेत्यादिना** ॥ ननु सिचस् शब्दे सिच्शब्दस्य पूर्वखण्डस्यान्तर्वर्तिविभक्त्या पदत्वाचो· कुरिति कुत्वप्रसङ्ग इत्यत आह। **सिच्शब्दस्य सौत्रं भत्वमिति** ॥ तथा च भत्वेन पदत्वस्य बाधान्नकुत्वमिति भाव । ननु सिचस्शब्दे अस् इत्यनेनैवास्तेर्लाभात् अस्तिग्रहण किमर्थमित्यत आह। **अस्तीत्यव्ययेन कर्मधारय इति** ॥ अस्तीति विभक्तिप्रतिरूपकमव्यय। लुप्तसुब्विभक्तिक विद्यमानार्थक। तेन सिचस्शब्दस्य कर्मधारय इत्यर्थ । तथा च अस्तिसिचस् इत्येक पदमिति स्थित। **ततः पञ्चम्यास्सौत्रो लुगिति** ॥ सुपा सुलुगित्यनेनेति शेष·। तथा च अस्ति सिच इति पदात् लब्धार्थमाह। **विद्यमानात्सिचोऽस्तेश्च परस्येति। हल इति** ॥ उतो वृद्धिर्लुकि हलीत्यतोऽनुवृत्तस्य हलीत्यस्य षष्ठ्या विपरिणाम इति भावः। **इतीट् नेहेति** ॥ अनेन सूत्रेण अभूत् इत्यत्र ईडागमो नेत्यर्थ.। कुत इत्यत आह। **सिचो लुका लुप्तत्वादिति** ॥ विद्यमानत्वविशेषणेन लुप्तात्सिचः परस्य नेति भावः। एवञ्च। अगादित्यादावपि लुप्तात्सिच. परस्य अस्तेर्लुङि कृतभूभावातपरस्य च नेत्युक्तप्रायम्। **ऐधिषीति** ॥ एधधातोर्लुङि उत्तमपुरुषैकवचन। इट्। अत्र इकारस्य सिचः परत्वेऽपि हल्त्वाभावात् ईडागमो नेति भावः। **ऐधिष्टेति** ॥ एधधातोर्लुङि प्रथमपुरुषैकवचनम्। अत्र त इत्यस्य सिच. परत्वेऽपि एकाल्प्रत्ययत्वाभावेनापृक्तत्वाभावात् ईडागमो नेति भाव.। **अभूतामिति** ॥ लुङस्तसि तस्य तामादेश। च्लेः सिच्। अट्। गुणनिषेध·। **सिजभ्यस्तेति** ॥ झेर्जुसिति सूत्रमनुवर्तते। नित्यङ्ङित इत्यत. ङित इति च। तदाह। **सिचोऽभ्यस्तादित्यादिना। इति प्राप्त इति** ॥ लिङो झेर्जुसिति शेष·। **आत इति** ॥ झेर्जुसिति सूत्रमनुवर्तते। आतस्सिज्लुगन्तादिति वक्तव्यमिति वार्तिक भाष्ये पठितम्। ततश्च सिज्लुकि यदाकारान्त तस्मात्परस्य झेर्जुसिति

सिज्लुक्यादन्तादेव झेर्जुस् स्यात् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ।

**२२२८ । न माङ्योगे । (६-४-७४)**

अडाटौ न स्तः । मा भवान् भूत् । मास्म भवन् भूद्वा ।

**२२२९ । लिङ्निमित्ते लृङ् क्रियातिपत्तौ । (३-३-१३९)**

हेतुहेतुमद्भावादिलिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात्क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम ।

लभ्यते । सिजभ्यस्तेति पूर्वसूत्रेणैव सिद्धे नियमार्थमिदम् । तदाह । **सिज्लुक्यादन्तादेवेति । अभूवन्निति** ॥ झि च्लि. सिच् लुक् अट् झोऽन्त इतश्चेति इकारलोपः । तकारस्य संयोगान्तलोपः । भुवो वुग्लुङ्लिटोरिति वुक् । सिज्लुकि आत एवेति नियमात् सिजभ्यस्तेति न जुसिति भावः । **अभूरिति** ॥ सिप् च्लिः सिच् लुक् अट् रुत्वविसर्गौ । **अभूतमिति** ॥ थसस्तम् । च्लेः सिजादेशः । सिज्लुक् । अट् । गुणनिषेधः । एवं थस्य तादेशे अभूतेति रूपम् । **अभूवमिति** ॥ मिप् अम् च्लिः सिच् लुक् अट् वुक् । **अभूवेति** ॥ वस् च्लिः सिच् लुक् अट् नित्यङ्गित इति सकारलोपः गुणनिषेधः । एवं मसि अभूमेति रूपम् । अथ माङि लुङि विशेषमाह । **न माङ्योग इति** ॥ शेषपूरणेन सूत्रं व्याचष्टे । **अडाटौ न स्त इति** ॥ लुङ् लङ् लृङ्क्ष्वडुदात्त इत्यतः, आडजादीनामित्यतश्च, तदनुवृत्तेरिति भावः । **मा भवान् भूदिति** ॥ माभूदित्यत्र अडागमे सति असति च विशेषाभावात् भवत्पदस्य मध्ये प्रयोगः । अथ स्मोत्तरे लङ्चेत्यस्य उदाहरति । **मास्मभवन्भूद्वेति** ॥ एवं बहुवचने मास्म भवन् मास्म भूवन्निति चोदाहरणम् बोध्यम् । **इति लुङ्प्रक्रिया** ॥ **लिङ्निमित्त इति । हेतुहेतुमद्भावादीति** ॥ हेतुहेतुमतोर्लिङ् । इच्छार्थेषु लिङ्लोटावित्यादिर्लिङ्निमित्त लकारार्थप्रक्रियायां स्पष्टीभविष्यति । **भविष्यदर्थ इति** ॥ भविष्यति मर्यादावचन इत्यतः तदनुवृत्तेरिति भावः । क्रियातिपत्तिपदं व्याचष्टे । **क्रियाया अनिष्पत्ताविति** ॥ सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यत् । इत्युदाहरणम् बोध्यम् । **अभविष्यदिति** ॥ लृङ् तिप् इतश्चेतीकारलोपः । स्यतासी लृलुटोरिति शबपवादः स्यप्रत्ययः । वलादिलक्षण इट् । गुणावादेशौ । षत्वम् । **अभविष्यतामिति** ॥ तसस्तामादेशः । स्यः अट् इट् गुणावादेशौ षत्वम् । **अभविष्यन्निति** ॥ झि स्यः अट् इट् गुणावादेशौ । झोऽन्तः इति झेरन्तादेशः इतश्चेतीकारलोपः । तकारस्य संयोगान्तलोपः । षत्वम् । **अभविष्य इति** ॥ सिप् स्यः अट् इट् गुणः अवादेशः इतश्चेतीकारलोपः षत्वम् । रुत्वविसर्गौ । **अभविष्यतमिति** ॥ थसस्तमादेशः स्यः अट् इट् गुणावौ षत्वम् । एवं थस्य तादेशादि पूर्ववत् । **अभविष्यमिति** । मिप् अम् स्य. अट् इट् गुणावौ इतश्चेतीकारलोपः ।

## २२३० । ते प्राग्धातोः । (१-४-८०)

ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः ।

## २२३१ । आनि लोट् । (८-४-१६)

उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि ।

**दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः ।**

दुःस्थितिः । दुर्भवानि ।

**अन्तः शब्दस्यांकिविधिणत्वेषूपसर्गत्वं वाच्यम् ।**

अन्तर्धा । अन्तर्धिः । अन्तर्भवाणि ।

## २२३२ । शेषे विभाषाऽकखादावषान्त उपदेशे । (८-४-१८)

उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन्धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा स्यात् । प्रणिभवति—प्रनिभवति । इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम्—

षत्वम् । **अभविष्यावेति** ॥ वस् स्य अट् इट् नित्य डित इति सकारलोपः । अतो दीर्घ. । पत्वम् । एवं मसि अभविष्यामेति रूपम् । **इति लृङ्प्रक्रिया** ॥ अथ प्रसङ्गादाह । **ते प्रागिति** ॥ ते इत्यस्य विवरणम् । **गत्युपसर्गसंज्ञा इति** ॥ उपसर्गाः क्रियायोगे गतिश्चेति प्रकृतत्वादिति भाव । **प्रागेवेति** ॥ न परतः नापि व्यवहिता इत्यर्थ । इह धातो प्रागेव प्रयुज्यमाना गत्युपसर्गास्स्युरिति सञ्ज्ञानियमपक्षोऽपि भाष्ये स्थित. । **आनि लोडिति** ॥ लोडिति आनीति च लुप्तषष्ठीकम् पदम् । रषाभ्यां णोन इत्यनुवर्तते । उपसर्गादसमासेपीत्यत उपसर्गादिति च । तदाह । **उपसर्गस्थान्निमित्तादिति** ॥ रेफषकारात्मकादित्यर्थः । असमानपदत्वार्थ आरम्भ. । अट्कुप्वाङ्नुम्व्यवायेपीति सूत्र णत्वप्रकरणे सर्वत्र भवतीति भाष्यम् । **दुरः षत्वेति** । षत्वणत्वयोः कर्तव्ययो दुर उपसर्गत्वप्रतिषेध इत्यर्थः । **दुःस्थितिरिति** । अत्रोपसर्गात् सुनोतीति षत्वं न भवति । **दुर्भवानीति** । अत्रानि लोटि णत्वन्न भवति । **अन्तश्शब्दस्येति** ॥ अङ्विधौ किविधौ णत्वे च कर्तव्ये अन्तर् इत्यस्य उपसर्गत्वमित्यर्थ । प्रादित्वाभावादप्राप्ते वचनम् । **अन्तर्धेति** ॥ स्त्रियामित्यधिकारे धाधातोः आतश्चोपसर्गे इत्यङ् । टाप् । **अन्तर्धिरिति** ॥ उपसर्गे घोः कि. । **अन्तर्भवाणीति** ॥ आनि लोडिति णत्वम् । **शेषे विभाषेति** ॥ अकखादाविति च्छेदः । नेर्गदनदेति पूर्वसूत्रोक्तधातुभ्योऽन्यश्शेष. । तदाह । **गदनदादेरन्यस्मिन्निति** ॥ ननु णत्वप्रकरण संहिताधिकारस्थ ततश्चाविवक्षितायां संहितायां उपसर्गात्परत्वाभावात् णत्वाभावः । विवक्षितायान्तु णत्वमिति विकल्पसिद्धेः किमिह विभाषाग्रहणेनेत्यत आह । **इहोपसर्गाणामिति । उक्तमिति** ॥

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥

इति । सत्ताद्यर्थनिर्देशश्चोपलक्षणम् । यागात्स्वर्गो भवतीत्यादावुत्पद्यत इत्याद्यर्थात् । उपसर्गास्त्वर्थविशेषस्य द्योतकाः । प्रभवति । पराभवति । सम्भवति । अनुभवति । अभिभवति । उद्भवति । परिभवतीत्यादौ विलक्षणार्थावगतेः । उक्तं च—

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवत् ॥ इति ।

। 'एध २ वृद्धौ' । कत्थन्ताः षट्त्रिंशदनुदात्तेतः ।

२२३३ । टित आत्मनेपदानां टेरे । (३-४-७९)

टितो लस्यात्मनेपदानां टेरेत्वं स्यात् । एधते ।

---

हरिणेति शेषः । अत्र एकपद इत्यनेन अखण्ड पद विवक्षितम् । नित्यासमास इति लिङ्गात् । अखण्डत्वञ्च पदभिन्नोत्तरखण्डत्वम् । तथा राजीयतीत्यादौ अतो गुण इति शपा पररूप एकादेशः पक्षे न स्यात् । **अर्थनिर्देशश्चेति** ॥ धातुपाठे भू सत्तायामित्याद्यर्थनिर्देश इत्यर्थः । **उपलक्षणमिति** ॥ प्रदर्शनमात्रमित्यर्थः । नन्वर्थान्तरपरिसङ्ख्या कुतो न स्यादित्यत आह । **यागादिति** ॥ ननु यागात् स्वर्गो भवतीत्यादौ उत्पत्त्यादौ लक्षणा कुतो न स्यादिति वाच्यम् । प्रयोगप्राचुर्यसत्वात् । पाणिनिर्हि धातुपाठे धातून् कांश्चिदर्थसहितान् कांश्चिदर्थरहितान् पठतीति चुद्र इति सूत्रभाष्ये स्थितम् । न चातिप्रसङ्गश्शङ्क्यः । अनेकार्था अपि धातवो भवन्तीति भाष्ये अपिशब्देन प्रयोगानुसारित्वावगतेः । सर्वेषु धातुष्वर्थनिर्देशस्त्वाधुनिकः । एवञ्च सेधतेर्गताविति सूत्रे गतावित्युपादानात् पिध गत्यामित्यर्थनिर्देशः अपाणिनीय एवेति दिक् । ननु भूधातोः केवलस्योत्पत्त्याद्यर्थकत्वे उद्भवतीत्यादौ उपसर्गा व्यर्था इत्यत आह । **उपसर्गास्त्विति** ॥ उपसर्गं विनाऽपि भूधातोरुत्पत्त्याद्यर्थप्रतीतेः उद्भवतीत्यादौ प्रयुज्यमाना अप्युपसर्गा द्योतका एव न तु वाचका इति भावः । द्योतकत्वं वा तेषां किमर्थं स्वीकार्यमित्यत आह । **प्रभवतीत्यादि** ॥ प्रभवः प्रकाशः उत्पत्तिः शक्तिर्वा । सम्भवः सम्भावना । पराभवः पराजयः । अनुभवः उपभोगः । अभिभवः हिंसा । उद्भवः उत्पत्तिः । परिभवः तिरस्कारः । **उक्तञ्चेति** ॥ हरिणेति शेषः । प्रहारः कशाद्याघातः । आहारो भक्षणम् । संहारः वधः । विहारः क्रीडा । परिहारः परित्यागः । **इति भूधातुप्रक्रिया** ॥

**एधवृद्धाविति** ॥ जायते, अस्ति, विपरिणमते, वर्धते; अपक्षीयते, विनश्यतीति षड् भावविकाराः । तत्र चतुर्थावस्था वृद्धिः उपचयः । **कत्थन्ता इति** ॥ कत्थ श्लाघायामित्यन्ता इत्यर्थः । **अनुदात्तेत इति** ॥ ततश्च एतेभ्य आत्मनेपदमेवेति भावः । तत्र एध् इत्यस्मात् कर्तरि लटि तस्यात्मनेपदप्रथमपुरुषैकवचने तादेशे शपि एधत इति स्थिते । **टित इति** ॥ टेः एरिति च्छेदः लस्येत्यधिकृतम् । तदाह । **टितो लस्येति** ॥ आदेशानामिति

## २२३४। सार्वधातुकमपित्। (१-२-४)

अपित्सार्वधातुकं ङिद्वत्स्यात्।

## २२३५। आतो ङितः। (७-२-८१)

अतः परस्य ङितामाकारस्य इय् स्यात्। एधेते। एधन्ते।

## २२३६। थासः से। (३-४-८०)

टितो लस्य थासः से स्यात्। एधसे। एधेथे। एधध्वे। 'अतो गुणे' (१९१) एधे। एधावहे। एधामहे।

## २२३७। इजादेश्च गुरुमतोऽनृच्छः। (३-१-३६)

इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम्स्याल्लिटि। 'आमो मकारस्य नेत्त्वम्'। आस्कासोराम्विधानाज्ज्ञापकात्।

शेषः। अत्रात्मनेपदशब्देन तदेव गृह्यते नत्वानोऽपि। तेन पचमानो यजमान इत्यादावेत्व नेति भाष्ये स्पष्टम्। **एधत इति** ॥ अत्र तकारादकारस्य व्यपदेशिवद्भावेनान्त्यादित्वेन टित्वादेत्वम्। अथ लटः प्रथमपुरुषद्विवचने आतामित्यादेशे टित आत्मनेपदानामिति आम एत्वे शपि एध आते इति स्थिते ङित्कार्यं वक्ष्यन् ङित्त्वमाह। **सार्वधातुकमपिदिति** ॥ गाङ्कुटादिभ्य इत्यतो ङिदित्यनुवर्तते। अङितो ङित्त्वं वास्तवं न सम्भवतीति ङिद्वदिति लभ्यते। तदाह। **ङिद्वदिति। आतो ङित इति** ॥ ङित इत्यवयवषष्ठी। अतो येय इत्यस्मात् अत इति पञ्चम्यन्त, इय इति प्रथमान्त चानुवर्तते। यकारादकार उच्चारणार्थः। तदाह। **अतः परस्येति** ॥ ङितामित्यनन्तरं अवयवस्येति शेषः। **एधेते इति** ॥ एध आते इति स्थिते, आकारस्य इय्, आद्गुणः, लोपो व्योर्वलीति यकारलोपइति भावः। **एधन्त इति** ॥ लट. प्रथमपुरुषबहुवचने झादेशे परे शपि झकारस्य अन्तादेशे पररूपे टेरेत्वमिति भावः। अथ लटो मध्यमपुरुषैकवचने थासादेशे कृते टितआत्मनेपदानामित्येत्वे प्राप्ते। **थासस्स इति** ॥ से इति लुप्तप्रथमाकम्। **एधस इति** ॥ थासि शपि थासः सेभावः। **एधेथ इति** ॥ लटो मध्यमपुरुषद्विवचने आथामादेशे शपि आम एत्वे आकारस्य इयादेशे गुणे यलोपे इति भावः। **एधध्व इति** ॥ लटो मध्यमपुरुषबहुवचने ध्वमादेशे शपि टेरेत्वे रूपम्। लट उत्तमपुरुषैकवचने इडादेशे एत्वे शपि एध ए इति स्थिते प्रक्रियां दर्शयति। **अतो गुणे इति** ॥ अतो गुण इति पररूपे वृध्यपवादे कृते सति एधे इति रूपमित्यर्थः। **एधावह इति** ॥ लट उत्तमपुरुषद्विवचने वहि इत्यादेशे टेरेत्वे शपि अतो दीर्घः। **एधामह इति** ॥ लट उत्तमपुरुषबहुवचने महि इत्यादेशे टेरेत्वे शपि अतो दीर्घः। महिङिति ङकारस्तङ्प्रत्याहारार्थः। **इति लट्प्रक्रिया** ॥

**इजादेरिति** ॥ नञः ऋच्छ इत्यनेन समासे अनृच्छ इत्यस्मात् पञ्चमी। धातोरेकाच इत्यतो धातोरित्यनुवर्तते। कास्प्रत्ययादित्यतः आमिति लिटीति चानुवर्तते। तदाह। **इजादि-**

## २२३८। आमः। (२-४-८१)

आमः परस्य लेर्लुक्स्यात्।

## २२३९। कृञ्चानुप्रयुज्यते लिटि। (३-१-४०)

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते। 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' (२२४०) इति सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञायते। तेन 'कृभ्वस्तियोगे–' (२११७) इत्यतः 'कृञो द्वितीय–' (२१२९) इति ञकारेण प्रत्याहाराश्रयणात्कृभ्वस्तिलाभः। तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां

रित्यादिना। आस्कासोरिति॥ कास् प्रत्ययादाममन्त्रे लिटीति, दयायासश्चेति च, कास धातोः, आस्धातोश्च, लिटि आम् विहितः। तत्र मकारस्य इत्सञ्ज्ञकत्वे मिदचोऽन्त्यात् पर इति आकारादाकारान्तरं स्यात्। ततश्च सवर्णदीर्घे कृते काम आम इत्येव भवतीति आ विधिरनर्थकस्स्यात्। अत आमो मकारस्य नेत्सञ्ज्ञेति विज्ञायते इत्यर्थः। तथाच एध आम् ल इति स्थिते। आम इति॥ मन्त्रे घसह्वरेत्यतः लेरिति, ण्यक्षत्रियार्षञित इत्यतः लुगिति चानुवर्तते। तदाह। आमः परस्य लेरिति॥ अवेदमवधेयम। कृन्मेजन्त इत्यत्र कृद्यो मान्तस्तदन्तमव्ययमिति व्याख्याने एधामित्यादि नाऽव्ययं, लिट एव कृत्त्वात् तस्य च मान्तत्वाभावात्। तथाच प्रत्ययलक्षणेन कृदन्तत्वात् प्रातिपदिकत्वे स्वाद्युत्पत्तौ आम इति लुक्। लेरिति तु नानुवर्तते। मान्तं कृदन्तमव्ययमिति व्याख्याने तु प्रत्ययलक्षणेन कृदन्तत्वात् एधामिति मान्तमव्ययम्। ततस्सुबुत्पत्तौ अव्ययादाप्सुप इति लुक्। आम इत्यनेन तु परिशेषाल्लेरेव लुक्सिद्धेर्लेरिति नानुवर्तनीयम्। आमः परस्य लेरिति विवरणवाक्ये तु लेरिति स्पष्टार्थमेव। एवञ्च एधामित्यव्ययं नवेति पक्षद्वयं। उभयथाऽपि सुबन्तं पदमिति भाष्ये स्पष्टम्। कृञ्चेति॥ कास्प्रत्ययादामित्यतः आमित्यनुवृत्तं पञ्चम्या विपरिणम्यते। प्रत्ययग्रहणपरिभाषया तदन्तं गृह्यते। लिटि परे यः कृञ् स अनुप्रयुज्यत इत्यन्वयः। फलितमाह। आमन्ताल्लिट्परा इति॥ लिट्शिरस्का इत्यर्थः। कृभ्वस्तय इति॥ कृञित्यनेन कृभ्वस्तीनां ग्रहणमिति भावः। अनुप्रयुज्यन्त इति॥ प्रशब्दादनुशब्दाच्चाऽव्यवहिताः पश्चात्प्रयुज्यन्त इत्यर्थः। विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं चेति वार्तिकात् भाष्याच्च। एवञ्च तं पातयाम्प्रथममास पपात पश्चात्। प्रभ्रंशयां यो नहुषं चकारेत्यादि प्रयोगाः प्रामादिका एव। धातोराम् स्यात्। कृञ्चानुप्रयुज्यत इत्युक्तसमुच्चयार्थश्चकारः। ननु कृञ एवानुप्रयोगश्रवणात् कथं भ्वस्त्योरप्यनुप्रयोग इत्यत आह। आम्प्रत्ययवदित्यादिना॥ कृञ्चानुप्रयुज्यत इत्यत्र कृञ एकस्यैवानुप्रयोगविधौ सति आम्प्रत्ययवदिति सूत्रे अनुप्रयुज्यमानस्येत्यस्य कृञ इति विशेषणं व्यर्थं स्यात्। धात्वन्तरस्यानुप्रयोगाप्रसक्तेः। ततश्च कृञ इति विशेषणादन्यस्यापि अनुप्रयोगो विज्ञायत इत्यर्थः। ननु कृञोऽन्यस्याप्यनुप्रयोगो विज्ञायताम्। भ्वस्त्योरपीत्येव कुत आयातमित्यत आह। तेनेति॥ कृञ्ग्रहणेनेत्यर्थः। प्रत्याहाराश्र-

विशेषवाचित्वात्तदर्थयोरभेदान्वयः। सम्पदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्विता-र्थत्वान्न प्रयुज्यते। कृञ्स्तु क्रियाफले परगामिनि परस्मैपदे प्राप्ते।

## २२४०। आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य। (१-३-६३)

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः। आम्प्रकृत्या तुल्यमनुप्रयु-ज्यमानात्कृञोऽप्यात्मनेपदं स्यात्। इह 'पूर्ववत्' इत्यनुवर्त्य वाक्यभेदेन सम्ब-

**यणादिति**॥ एतच्च भाष्ये स्पष्टम्। नन्वनुप्रयुज्यमानानां कृभ्वस्तीना आम्प्रकृतिभूताना कथमन्वय इत्यत आह। **तेषामित्यारभ्याभेदेनान्वय इत्यन्तेन**॥ सामान्यविशेषयो-रभेदान्वयस्य न्याय्यत्वादिति भाव। कृञ इव भ्वस्त्योरपि क्रियासामान्यवाचित्वात्। धातूनामने-कार्थत्वात् ज्ञेयम्। ननु कृभ्वस्तियोग इत्यस्य कृञो द्वितीयेत्यस्य च सूत्रस्य मध्ये 'अभिविधौ सम्पदा च' इति पठितम्। एवञ्च कृञ्प्रत्याहारे सम्पदोऽपि कुतो न ग्रहणमित्यत आह। **सम्पदिस्त्विति। अनन्वितार्थत्वादिति**॥ सिद्धस्य वस्तुनो रूपान्तरापत्तिस्सम्पदेरर्थ.। एधादिधातोस्त्वाम्प्रकृतिभूतस्य वृध्यादिरर्थः। तयोरुभयोरपि विशेषरूपत्वेन सामान्यविशेष-भावाभावेन अभेदान्वयासम्भवादित्यर्थ॰। अत एव कृभ्वस्तीनां ग्रहणमिति भाष्य सङ्ग-गच्छत इति भावः। ननु आम्प्रत्ययवदिति कृञ आत्मनेपदविधायकसूत्र वक्ष्यमाण व्यर्थम्। स्वरितञित इत्येव तत्सिद्धेरित्याशङ्क्याह। **कृभ्वस्तीति। आम्प्रत्ययवदिति**॥ अनुदात्तङित इत्यत आत्मनेपदमित्यनुवर्तते। तत्राम्प्रत्ययस्यात्मनेपदाभावादाह। **आम् प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिरिति**॥ तस्य अन्यपदार्थस्य गुणा विशेष-णानि वर्तिपदार्थरूपाणि तेषां सविज्ञान क्रियान्वयितया ज्ञान न विद्यते यस्य बहुव्रीहेः स. अत-द्गुणसविज्ञानः। यथा चित्रगुमानयेति। अत्र हि पुरुषस्यैवान्यपदार्थस्य क्रियान्वय। न तु चित्राणा गवामपि। तथा च प्रकृते आम् प्रत्ययविनिर्मुक्त आम्प्रत्ययप्रकृतिभूत॰ एधादिधातुरेव आम्प्रत्ययशब्देन लभ्यत इति भावः। **आम्प्रत्ययवदिति**॥ तृतीयान्ताद्वति॰। अनुप्रयुज्यत इत्यनुप्रयोग। कर्मणि घञ्। पञ्चम्यर्थे षष्ठी। तदाह। **आम् प्रकृत्येत्यादिना**॥ आम्प्रकृते-र्भुवितु योग्य यदात्मनेपद तत् अनुप्रयुज्यमानात् कृञोऽपि स्यादिति यावत्। अत्र न प्रत्या-हारग्रहणम्। अनुप्रयोगस्येत्येव सिद्धे कृञ्ग्रहणादिह न प्रत्याहारग्रहणमिति भाष्यम्। परगामिन्यपि क्रियाफले कृञ्धातोरात्मनेपदार्थोऽयमारम्भः। इन्दाञ्चकारेत्यादौ तु परगामिनि क्रियाफलेनानेना-त्मनेपदम्। आम्प्रकृतेः 'इदि परमैश्वर्ये' इति धातोरात्मनेपदाभावात् तस्य परस्मैपदित्वात् एतदर्थ-मेव आम्प्रत्ययवदित्युपात्तम्। नन्विन्दाञ्चकारेत्यादौ मास्त्वनेन सूत्रेण परगामिनि क्रियाफले आत्म-नेपदम्। आत्मगामिनि तु क्रियाफले स्वरितञित इत्यात्मनेपदं दुर्वारम्। अस्य सूत्रस्य एधाञ्चक्र इत्यादौ परगामिनि क्रियाफले आत्मनेपदस्याप्राप्तस्य विधान एव समर्थतया आत्मगामिनि क्रियाफले स्वरितञित इति प्राप्तस्यात्मनेपदस्य निवारणे सामर्थ्याभावादित्यत आह। **इहेति**॥ इह आम्प्रत्ययवत् कृञोऽनुप्रयोगस्येति सूत्रे 'पूर्ववत् सनः' इति पूर्वसूत्रात् पूर्ववदित्यनुवर्त्य

द्ध्यते । पूर्ववदेवात्मनेपदं न तु तद्विपरीतमिति। तेन कर्तृगेऽपि फले इन्दांचकारेत्यादौ न तङ् ।

## २२४१ । लिटस्तझयोरेशिरेच्। (३-४-८१)

लिडादेशयोस्तझयो: 'एश्' 'इरेच्' एतौ स्तः । एकारोच्चारणं ज्ञापकं 'तङादेशानां टेरेत्वं न' इति । तेन डारौरसां न । 'कृ' 'ए' इति स्थिते ।

## २२४२ । असंयोगाल्लिट्कित् । (१-२-५)

असंयोगात्परोऽपिल्लिट्कित्स्यात्। 'क्ङिति च' (२२१७) इति निषेधात् 'सार्वधातुकार्धधातुकयोः' (२१६८) इति गुणो न । द्वित्वात्परत्वाद्यणि प्राप्ते ।

## २२४३ । द्विर्वचनेऽचि । (१-१-५९)

आम्प्रत्ययवत् कृञोऽनुप्रयोगस्येत्येक वाक्य, पूर्ववत् कृञोऽनुप्रयोगस्येति अन्यद्वाक्यमिति, वाक्यद्वयं सम्पाद्यम् । तत्र पूर्ववदिति तृतीयान्ताद्वतिः । पूर्वेण पूर्वप्रयुक्तेन एधादिधातुना तुल्यमित्यर्थः । तत्र वाक्यद्वयस्य समानार्थकत्वे वैयर्थ्यात् द्वितीयं वाक्य नियमार्थं सम्पद्यते । पूर्ववदेव आत्मनेपद न तु तद्विपरीतमिति । एवञ्च पूर्ववाक्येन एधाञ्चक्रे इत्यादौ कृञः परगामिन्यपि क्रियाफले आत्मनेपदविधिः । द्वितीयवाक्येन तु इन्दाञ्चकारेत्यादौ कर्तृगामिनि क्रियाफले स्वरितञित इत्यात्मनेपदस्य निवृत्ति. फलति। तदाह । **तेनेति** ॥ द्वितीयवाक्येनेत्यर्थः । **न तङिति** ॥ न आत्मनेपदमित्यर्थः । एवञ्चानुप्रयुज्यमानात्कृञ· लिटस्तादि प्रथमपुरुषैकवचने तादेशे एधाम् कृ त इति स्थिते । **लिटस्तझयोरिति** ॥ ननु लिटस्तझयोरिशिरिजित्येवास्तु। आदेशयोरेकारोच्चारण व्यर्थम् । टित आत्मनेपदानामित्येत्वेनैव सिद्धेरित्यत आह । **एकारोच्चारणमिति** ॥ ज्ञापनस्य फलमाह । **तेन डारौरसान्नेति** ॥ डा रौ रस् एषां लुडादेशभूतात्मनेपदादेशानां टेरेत्वन्नेत्यर्थः । वस्तुतस्तु परत्वादेत्वे कृते पुन.प्रसङ्गविज्ञानेन डादिषु कृतेषु लक्ष्ये लक्षणस्येति न्यायात् । **एत्वं नेति** ॥ लुटः प्रथमस्येति सूत्रभाष्ये स्पष्टम । **कृ ए इति स्थित इति** ॥ तकाराकारसंघातस्य एकारादेशित्वात् सर्वादेश इति भावः । **असंयोगादिति । अपिदिति** ॥ सार्वधातुकमपिदित्यतस्तदनुवृत्तेरिति भाव.। **सार्वधातुकमपिदिति** ॥ ङित्वन्तु नात्र प्रवर्तते । लिडादेशानामार्धधातुकत्वादिति बोध्यम् । कित्वस्य फलमाह । **क्ङिति चेति । द्वित्वादिति** ॥ कृ ए इति स्थिते । लिटि धातोरिति द्वित्वात् परत्वात् इको यणचीति ऋकारस्य यणादेशे रेफे प्राप्ते सतीत्यर्थः । कृते तु यणि एकाच्त्वाभावात् लिटि धातोरिति द्वित्वम् न स्यादिति भावः। **द्विर्वचन इति** ॥ द्विरुच्यते येन परनिमित्तेन तत् द्विर्वचनं द्वित्वनिमित्तमिति यावत् । अचीत्यस्य विशेषणमिदम् । अचः परस्मिन्नित्यतः अच इति स्थानिवदादेश इत्यतः आदेश इति न पदान्तेत्यतः नेति चानुवर्तते । द्विर्वचन इत्यावर्तते । एवञ्च द्वित्वे

द्वित्वनिमित्तेऽचि परे अच आदेशो न स्याद्द्वित्वे कर्तव्ये ।

### २२४४ । उरत् । (७-४-६६)

अभ्यासऋवर्णस्यात्स्यात्प्रत्यये परे । रपरत्वम् । 'हलादिः शेषः' (२१७९) । 'प्रत्यये' किम् । वव्रश्च ।

### २२४५ । कुहोश्चुः । (७-४-६२)

अभ्यासकवर्गहकारयोश्चवर्गादेशः स्यात् । एधाञ्चक्रे । एधञ्चक्राते । एधाञ्चक्रिरे ।

---

कर्तव्ये सतीत्यपि लभ्यते । तदाह । **द्वित्वनिमित्ते अचीत्यादिना** ॥ द्वित्वे कर्तव्ये सतीत्युक्तेः कृते द्वित्वे चक्रे इत्यादौ यणादयो भवन्ति । अन्यथा तु न स्यु. । द्वित्वनिमित्तस्य अचस्सत्वात् । द्वित्वनिमित्त इति किम् । दुद्यूषति । दिव् धातो· सनि द्वित्वात्परत्वात् ऊठि कृते द्वित्वात्प्राग्यण् भवत्येव । तथा द्यु इत्यस्य द्वित्वे दुद्यूषतीति सिध्यति । द्वित्वे कर्तव्ये यणो निषेधे तु दिद्यूषतीत्यभ्यासे इकार एव श्रूयेत । नतूकार । द्वित्वनिमित्त इत्युक्तौ तु ऊठि परे द्वित्वात् प्राक् यणो न निषेध । ऊठो द्वित्वनिमित्तत्वाभावात् । अचीति किम् । जेघ्रीयते । अत्र घ्राधातोर्यङि द्वित्वात् प्राक् 'ई घ्राध्मो·' इति ईकारादेशो न निषिध्यते । ईत्वस्य द्वित्वनिमित्तयङ्निमित्तकत्वेऽपि द्वित्वनिमित्ताज्निमित्तकत्वाभावात् । अचः किम् । असूषुपत् । इह स्वापेश्चङि द्वित्वात् प्राक् स्वापेश्चङीति वकारस्य सम्प्रसारण न निषिध्यते । तस्याजादेशत्वाभावात् । ततश्च कृते सम्प्रसारणे सुप् इत्यस्य द्वित्वे अभ्यासे उकारस्य श्रवण सम्भवति । सम्प्रसारणे निषिद्धे तु स्वप् इत्यस्य द्वित्वे अभ्यासे उकारो न श्रूयेत । एवञ्च प्रकृते यणादेशात् प्राक् लिटिधातोरिति द्वित्वे कृ कृ ए इति स्थिते । **उरदिति** ॥ उः अत् इति च्छेद· । ऋ इत्यस्य उरिति षष्ठ्येकवचनम् । अत्र लोपोऽभ्यासस्येत्यस्मादभ्यासस्येत्यनुवर्तते । अङ्गस्येत्यधिकृतम् । तद्वशात् प्रत्यये परत इति लभ्यते । प्रत्यये परत एव अङ्गसञ्ज्ञाविधानात् । तदाह । **अभ्यासऋवर्णस्येत्यादिना** । **रपरत्वमिति** ॥ अभ्यासऋवर्णादेशस्याकारस्योरण्रपर इति रपरत्वमित्यर्थः । तथाच कर् कृ ए इति स्थिते, हलादिश्शेष इति रेफस्य निवृत्तिरिति भाव । **प्रत्यये किमिति**॥ अङ्गेनैव प्रत्ययस्याक्षिप्तत्वात् प्रत्यये परत इति किमर्थमित्यर्थः । **वव्रश्चेति** ॥ ओ व्रश्चू च्छेदने, लिटि णल् द्वित्व लिट्यभ्यासस्येति अभ्यासरेफस्य सम्प्रसारणम् । ऋकार । उरत् । रपरत्वम् । हलादिश्शेष । वव्रश्चेति रूपम् । अत्र अभ्यासऋवर्णस्य रेफस्थानिकस्य सम्प्रसारणस्य य उरदत्वसम्पन्नः अकारः तस्य अचःपरस्मिन्निति स्थानिवत्त्वेन सम्प्रसारणतया तस्मिन् परे वकारस्य न सम्प्रसारणे सम्प्रसारणमिति निषेधान्न सम्प्रसारणमिति स्थिति· । उरदित्यत्र प्रत्यये परत इत्यनुक्तौ तु सम्प्रसारणभूतऋकारस्थानिकस्य अकारस्य परनिमित्तकत्वाभावेन स्थानिवत्वाप्रसक्ते. सम्प्रसारणत्वाभावात्तस्मिन् परतो न सम्प्रसारणे सम्प्रसारणमिति निषेधो न स्यादिति भाव । एवञ्च क कृ ए इति स्थिते । **कुहोश्चुरिति** ॥ कु हु इत्यनयोर्द्वन्द्वात् षष्ठीद्विवचनम् । अत्र लोपोऽभ्यासस्येत्यतः अभ्यासस्येत्यनुवर्तते । तदाह । **अभ्यासेति** ॥ यद्यपि स्थानिनां कव-

## २२४६ । एकाच उपदेशेऽनुदात्तात् । (७-२-१०)

**उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्धधातुकस्येड् न स्यात् ।**

र्गीयाणां हकारस्य च षट्त्वात् चवर्गीयाणां पञ्चत्वान्न यथासङ्ख्यम्, नापि स्थानत आन्तर्यम्, कण्ठतालुस्थानभेदात् । आभ्यन्तरप्रयत्नसाम्यं तु कवर्गचवर्गयोरविशिष्टम् । हकारचवर्गयोस्तु नास्त्येव तत्। अतो बाह्यप्रयत्नत एवान्तर्यमिह व्यवस्थापकमाश्रयणीयम्। तत्र प्रथमस्य कवर्गीयस्य प्रथम एव चवर्गीयो भवति। अघोषश्वासविवाराल्पप्राणप्रयत्नसाम्यात्। न तु द्वितीयः। महाप्राणत्वात्। नापि तृतीयपञ्चमौ। घोषसंवारनादप्रयत्नत्वात्। नापि चतुर्थः। घोषसंवारनादमहाप्राणप्रयत्नत्वात्। तथा द्वितीयस्य कवर्गीयस्य द्वितीय एव चवर्गीयो भवति। अघोषश्वासविवारमहाप्राणप्रयत्नत्वात्। न तु प्रथमः। अल्पप्राणत्वात्। नापि तृतीयपञ्चमौ। घोषसंवारनादाल्पप्राणप्रयत्नत्वात्। नापि चतुर्थः। अघोषसंवारनादप्रयत्नत्वात्। तथा तृतीयस्य कवर्गस्य तृतीय एव चवर्गीयो भवति। घोषसंवारनादाल्पप्राणप्रयत्नत्वात्। न तु प्रथमः। अघोषश्वासविवारप्रयत्नत्वात्। अत एव न द्वितीयोऽपि। महाप्राणप्रयत्नत्वाच्च। नापि चतुर्थः। महाप्राणत्वात्। नापि पञ्चमः। घोषसंवारनादाल्पप्राणसाम्येऽपि अनुनासिकतया भेदात्। तथा चतुर्थस्य कवर्गीयस्य चतुर्थ एव चवर्गीयो भवति। घोषसंवारनादमहाप्राणप्रयत्नत्वात्। न तु प्रथमः। अघोषश्वासविवाराल्पप्राणप्रयत्नत्वात्। नापि द्वितीयः। अघोषविवारश्वासप्रयत्नत्वात्। नापि तृतीयपञ्चमौ। अल्पप्राणत्वात्। पञ्चमस्य तु कवर्गीयस्य अनुनासिकत्वात् ञकार एव। हकारस्य तु घोषसंवारनादमहाप्राणवतः तादृशो वर्गचतुर्थ एव झकार इति विवेकः। प्रकृते तु क कृ ए इति स्थिते अभ्यासककारस्य चकारे ऋकारस्य यणि रेफः। तदाह। **एधाञ्चक्र इति** ॥ एककर्तृका भूतानद्यतनपरोक्षा वृद्धिरूपा क्रियेत्यर्थः। **एधाञ्चक्राते इति** ॥ कृञो लिट आतामि टेरेत्वम्। द्विर्वचनेऽचीति यणि निषिद्धे कृ इत्यस्य द्वित्वे उरदत्वम्। हलादिश्शेषः। चर्त्वम्। यण्। न च आतामित्यस्य द्वित्वनिमित्तत्वेऽपि आकारस्याचो द्वित्वनिमित्तत्वाभावात् कथमिह द्विर्वचनेऽचीति यण निषेध इति वाच्यम्। साक्षाद्वा समुदायघटकतया वा द्वित्वप्रयोजकस्यैव द्वित्वनिमित्तशब्देन विवक्षितत्वादिति भावः। **एधाञ्चक्रिरे इति** ॥ झस्य इरेच्। कृ इत्यस्य द्वित्वादि पूर्ववत्। अथ लिटि थासस्सेभावे कृ इत्यस्य द्वित्वादौ एधाञ्चकृ से इति स्थिते आर्धधातुकस्येड्वलादेरिति इडागमे प्राप्ते। **एकाच उपदेश इति** ॥ ऋत इद्धातोरित्यतः धातोरित्यनुवर्तते। नेड्वशिकृतीत्यतः नेति च। तदाह। **उपदेशे यो धातुरेकाजिति** ॥ एकः अच् यस्येति बहुव्रीहिः। **आर्धधातुकस्येति** ॥ यद्यपीदं न श्रुतम्। नाप्यनुवृत्तिलभ्यम्। तथाप्यार्थिकमिदम्। आर्धधातुकस्यैवेटः प्राप्तेः। वृत्तिग्रन्थे तु आर्धधातुकस्येति नोपात्तम्। नन्वेकाच उपदेशेऽनुदात्तादित्यत्र यदि उपदेश इत्येतदेकाच इत्यत्रान्वेति तदा कर्तुमित्यत्र इण्णिषेधो न स्यात्। कृञ्धातोरूदृदन्तैरित्यादिना अनुदात्तत्वस्य वक्ष्यमाणत्वेऽपि तुमुन्प्रत्यये कृते ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वात्। यदि तु उपदेश इत्येतत् अनु-

'उपदेशे' इत्युभयान्वयि। 'एकाचः' इति किम्। यङ्लुग्व्यावृत्तिर्यथा स्यात्। स्मरन्ति हि—

शितपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ इति ।

एतच्चेहैवैकाज्ग्रहणेन ज्ञाप्यते । 'अचः' इत्येवैकत्वविवक्षया तद्वतो ग्रहणे सिद्धे एकग्रहणसामर्थ्यादनेकाच्कोपदेशो व्यावर्त्यते । तेन वधेर्हन्त्युपदेशे एकाचोऽपि न निषेधः । आदेशोपदेशेऽनेकाच्कत्वात्। अनुदात्ताश्चानुपदमेव संग्रहीष्यन्ते । एधांचकृषे । एधांचक्राथे ।

दात्तादित्यनेनान्वेति । तदा यद्यपि नाय दोष. । कृते तुमुन्प्रत्यये उदात्तत्वेऽपि धातूपदेशकाले अनुदात्तत्वेन तत्र इण्णिषेधस्य निर्बाधत्वात् । तथाच एधाञ्चकृषे इत्यादौ इण्णिषेधो न स्यात्। द्वित्वे कृते अनेकाच्त्वादित्यत आह । **उपदेश इत्युभयान्वयीति** ॥ उपदेश इत्येतत् एकाजित्यत्रानुदात्तादित्यत्र चान्वेति । मध्यमणिन्यायादिति भावः । ननु ऊदृदन्तैरित्यादिना परिगणितानामनुदात्तोपदेशधातूनामेकाच्त्वाव्यभिचारादेकाज्ग्रहण मास्तु । उपदेशेऽनुदात्तादित्येवास्तु । एतावतैव कर्तु चकृष इत्यादाविण्निषेधसिद्धेरिति पृच्छति । **एकाचः किमिति। यङ्लुग्व्यावृत्तिरिति** ॥ यङ्लुकि चर्करितेत्यादौ इण्णिषेधव्यावृत्तये एकाज्ग्रहणमित्यर्थ. । ननु कृतेप्येकाज्ग्रहणे कथ यङ्लुग्व्यावृत्ति· । कृते द्वित्वे अनेकाच्त्वेपि धातूपदेशे एकाच्त्वादित्यत आह । **स्मरन्ति हीति** ॥ प्राचीनाचार्या निबध्नन्तीत्यर्थ. । शितपा शपेत्यादेरुदाहरणानि यङ्लुङ्निरूपणे स्पष्टीभविष्यन्ति । नन्विह एकाज्ग्रहणाद्यङ्लुकि इण्णिषेधस्य व्यावृत्तावपि शितबादिनिर्दिष्टानां यङ्लुग्व्यावृत्ति. प्राचीनाचार्यसम्मताऽपि पाणिनेरसम्मतैवेत्यत आह । **एतच्चेति** ॥ एतत् शितपा शपेति श्लोकसिद्धं सर्वमपि, इह सूत्रे एकाज्ग्रहणेनैव एकदेशानुमत्या ज्ञाप्यत इत्यर्थः । ननु हनोवधलुङीति हनधातोर्वधादेशे कृते अवधीदित्यत्र इडागमो न स्यात्। वधादेशे कृते अनेकाच्त्वेऽपि धातूपदेशे हन्तेरेकाच्त्वादित्यत आह । **अच इत्येकत्वेत्यादि व्यावर्त्यत इत्यन्तम्** ॥ एकाच उपदेशेऽनुदात्तादित्यत्र हि एकग्रहणमपनीयाचइत्युक्तेऽपि एकाच्कादिति लभ्यते। एकवचनोपात्तस्यैकत्वस्य त्यागे प्रमाणाभावात् । न चैव सति एकत्वविशिष्टादचः परस्येत्येव लभ्येत। नत्वेकाच्कादिति बहुव्रीह्यर्थ इति वाच्यम्। अनुदात्तोपदेशपरिगणने शक्ल पचि मुच्यादीनां परिगणनसामर्थ्येन अच इत्यस्य मत्वर्थलक्षणामाश्रित्य एकाज्वतो ग्रहणसंभवात्। तदेवमच इत्यनेनैव एकाच्कादिति सिद्धे यदेकग्रहणं करोति तत्सामर्थ्यादुपदेशे सर्वत्र एकाजेव न तु कस्मिंश्चिदप्युपदेशे अनेकाजित्यर्थकल्पनया कदाचिदनेकाच्कोपदेशधातुर्व्यावर्तत इत्यर्थः। **तेनेति** ॥ उपदेशे सर्वत्र एकाजेवेत्यर्थलाभेन हन्त्युपदेशे हनित्यनुदात्तोपदेशे एकाचोऽपि सतो हनिति धातोरादेशस्य वधेः परस्य इण् निषेधो नेत्यर्थः। कुत इत्यत आह । **आदे-**

### २२४७। इणः षीध्वंलुङ्लिटां धोऽङ्गात्। (८-३-७८)

इण्णन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः स्यात्। एधाञ्चकृढ्वे। एधांचक्रे। एधाञ्चकृवहे। एधाञ्चकृमहे। एधाम्बभूव। अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न। अन्यथा हि 'कृस्चानुप्रयुज्यते' इति 'कृभु—' इति वा ब्रूयात्।

### २२४८। अत आदेः। (७-४-७०)

अभ्यासस्यादेरतो दीर्घः स्यात्। पररूपापवादः। एधामास। एधामासतुरित्यादि। एधिता। एधितारौ। एधितारः। एधितासे। एधितास्माथे।

**शोपदेश इति॥** अवर्धादित्यत्रातोहलादेर्लघोरिति वृद्धिनिवृत्तये हनो वधादेशस्य अदन्ततया भाष्ये उक्तत्वादिति भावः। ननु के ते अनुदात्ता धातव इत्यत आह। **अनुदात्तास्त्वनुपदमेवेति॥** पदस्य पश्चादनुपदम् पदमात्रे अतीते सतीत्यर्थः। अनन्तरमेवेति यावत्। **एधाञ्चकृषे इति॥** इडभावे प्रत्ययावयवत्वात् षत्वम्। **एधाञ्चक्राथ इति॥** लिटः आथामादेशः। टेरेत्वम्। द्वित्वादि पूर्ववत्। लिटो ध्वमष्टेरेत्वे द्वित्वादौ एधाञ्चकृध्वे इति स्थिते। **इणः षीध्वमिति॥** षीध्व लुङ् लिट एषां द्वन्द्वः ध इति षष्ठ्येकवचनम्। इण इत्यङ्गविशेषणम्। तदन्तविधिः। अपदान्तस्य मूर्धन्य इत्यधिकृतम्। तदाह। **इण्णन्तादित्यादिना॥** धकारस्य ढकारो मूर्धन्यः। घोषसंवारनादमहाप्राणप्रयत्नसाम्यात्। तदाह। **एधाञ्चकृढ्व इति॥** उत्तमपुरुषैकवचने इटि एत्वे पूर्ववत् द्वित्वादौ कृते रूपमाह। **एधाञ्चक्र इति। एधाञ्चकृवह इति॥** लिटो वहिभावे एत्वे द्वित्वादि पूर्ववत्। एवं लिटो महिभावे द्वित्वादि पूर्ववत्। सर्वत्रासंयोगाल्लिटकिदिति कित्वाद्गुणाभावः। अथ भूधातोः लिडन्तस्यानुप्रयोगे उदाहरति। **एधाम्बभूवेति॥** एधाञ्चक्र इत्यनेन समानार्थकम्। अनुप्रयुज्यमानस्य भूधातोः क्रियासामान्यार्थकत्वात्। नन्वस्तेरनुप्रयोगे लिडादेशस्यार्धधातुकत्वात् अस्तेर्भूरित्यार्धधातुके विहितो भूभावः कुतो न स्यादित्यत आह। **अनुप्रयोगेति॥** कृञ्चानुप्रयुज्यत इत्यत्र प्रत्याहारमाश्रित्य कृभ्वस्तीनामनुप्रयोगविधिसामर्थ्यादस्धातोर्भूभावो नेत्यर्थः। तदेवोपपादयति। **अन्यथेति॥** अनुप्रयुज्यमानस्यास्तेर्भूभावाभ्युपगमे कृञ्चानुप्रयुज्यत इत्यनुप्रयोगविधौ कृस्चानुप्रयुज्यत इति वा कृभुचानुप्रयुज्यत इति वा ब्रूयात्। तावता एधाम्बभूवेति सिद्धेरित्यर्थः। यद्यपि कृञित्युक्तौ लाघवमस्ति। तथापि एकस्यैव भवतेरधिकस्य लाभाय कृञिति प्रत्याहारक्लेशो न कर्तव्य इति भावः। अत एवात उत्सार्वधातुक इति सूत्रभाष्येऽनुप्रयोगे भूभावेन अस्तेरबाधनमिति भाष्ये सङ्गच्छते। ततश्च अनुप्रयुज्यमानादस्धातोर्लिटि भूभावानिवृत्तौ णलि एधा अम् अ इति स्थिते द्वित्वे हलादिश्शेषे अ अस् इति स्थिते सवर्णदीर्घम्बाधित्वा अतो गुण इति पररूपे प्राप्ते। **अत आदेरिति॥** अत्रलोप इत्यस्मादभ्यासस्येत्यनुवर्तते। व्यथो लिटीत्यतो दीर्घ इति। तदाह। **अभ्यासस्येति॥** अत्र यद्वक्तव्यन्तन्नामधातुप्रक्रियायां अ इवाचरति अतीत्यादि ग्रन्थस्य व्याख्या-

## २२८७ । उपसर्गादसमासेऽपि णोपदेशस्य । (८-४-१४)

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि । प्रणदति । प्रणिनदति । 'अर्द ५५ गतौ याचने च' 'अत आदेः' २२४८ ।

## २२८८ । तस्मान्नुड्द्विहलः । (७-४-७१)

द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् । आनर्द । आर्दीत् । 'नर्द ५६ गर्द ५७ शब्दे' । णोपदेशत्वाभावान्न णः । प्रनर्दति । गर्दति । जगर्द । 'तर्द ५८ हिंसायाम्' । तर्दति । 'कर्द ५९ कुत्सिते शब्दे' । कुत्सिते कौक्षे कर्दति । 'खर्द ६० दन्दशूके' । दंशनहिंसादिरूपायां दन्दशूकक्रियायामित्यर्थः । खर्दति । चखर्द । 'अति ६१ अदि ६२ बन्धने' । अन्तति । आनन्त । अन्दति । आनन्द । इदि ६३ परमैश्वर्ये' । इन्दति । इन्दांचकार । 'बिदि ६४ अवयवे' । पवर्गतृतीयादिः । बिन्दति । अवयवं करोतीत्यर्थः । 'भिदि' इति

णकारमुपदिश्य तस्य किमर्थं नकारो विधीयते । नकारणत्वोपदिश्यतामित्याशङ्क्य तत्प्रयोजनमाह । **उपसर्गादिति** ॥ रषाभ्यां नो ण इत्यधिकृतम् । तदाह । **उपसर्गस्थादिति** ॥ समासेऽङ्गुलेः सङ्ग इत्यतः समास इत्यनुवृत्तेरसमासे नस्यादित्यसमासग्रहणम् । तथा सति प्रणाम इत्यादौ समासे नस्यादित्यपिग्रहणम् । तदाह । **समासे असमासेऽपीति** ॥ णस्योपदेशो यस्मिन्निति विग्रहः । **प्रणदतीति** ॥ भिन्नपदत्वादप्राप्ति । **प्रणिनदतीति** ॥ नेर्गदेति णत्वम् । नचात्र उपसर्गादसमास इति धातुनकारस्य णत्वं शङ्क्यम् । अट्कुप्वाङ्व्यवायेऽभिमतेन व्यवधानात् । **अर्दतीति** ॥ उपधायाश्चेत्यत्र इक इत्युपस्थानात् अर्दतीत्यादौ न दीर्घः । लिटि णलि द्वित्वे हलादि शेषे अतआदेरित्यभ्यासाकारस्य दीर्घे आ अर्द इति स्थिते । **तस्मान्नुडिति** ॥ द्वौ हलौ यस्य तस्येति विग्रहः । तच्छब्देन अत आदेरिति कृतदीर्घः परामृश्यते । तदाह । **दीर्घीभूतादिति** ॥ टकार इत् । उकार उच्चारणार्थः । टित्वादाद्यवयवः । तदाह । **आनर्देति** ॥ **आर्दीदिति** ॥ इटईटि इति सिज्लोप । नर्देत्यादि स्पष्टम् । **कर्दतीति** ॥ कुत्सितशब्देन कुत्सितशब्दविशेषो विवक्षित इत्याह । **कुत्सिते कौक्ष इति** ॥ कुक्षिभवे इत्यर्थः । **खर्दतीति** ॥ दन्दशूकः दंशनस्वभावस्सर्पः । दन्दशूको बिलेशय इत्यमरः । ननु सर्पस्य क्रियात्वाभावात् कथन्धात्वर्थत्वमित्यत आह । **दंशनेति । अतिअदीति** ॥ इदित्वान्नुम् । तदाह । **अन्ततीति । आनन्तेति** ॥ अत आदेरिति दीर्घः । तस्मान्नुड्द्विहल इति नुट् । एवमन्दति । **आनन्देति** ॥ आन्दीत् । **इदीति** ॥ परमैश्वर्यम् परमेश्वरीभवनम् । **इन्दतीति** ॥ इदित्वान्नुम् । **इन्दांचकारेति** ॥ इजादेश्चेत्याम् । **बिदीति** ॥ इदित्वान्नुमित्याह । **बिन्दतीति** ॥ नन्ववयवस्य अक्रियारूपत्वात् कथन्धात्वर्थत्वमित्यत आह । **अवयवंकरोतीत्यर्थ इति** ॥ अबिन्दीत् अबिन्दिष्यामित्यादि ।

पाठान्तरम् । 'गडि ६५ वदनैकदेशे' गण्डति । 'अन्तत्यादयः पञ्चैते न तिङ्विषया' इति काश्यपः । अन्ये तु तिङमपीच्छन्ति । 'णिदि ६६ कुत्सायाम्' । निन्दति । प्रणिन्दति । 'टुनदि ६७ समृद्धौ' ।

## २२८९ । आदिर्ञिटुडवः । (१-३-५)

उपदेशे धातोराद्या एते इतः स्युः । नन्दति । इदित्त्वान्नलोपो न । नन्द्यात् । 'चदि ६८ आह्लादे' चन्दति । चचन्द । 'त्रदि ६९ चेष्टायाम्' त्रन्दति । तत्रन्द । 'कदि ७० क्रदि ७१ क्लदि ७२ आह्वाने रोदने च' । चकन्द । चक्रन्द । चक्लन्द । 'क्लिदि ७३ परिदेवने' । चिक्लिन्द । 'शुन्ध ७४ शुद्धौ' शुन्धति । शुशुन्ध । नलोपः । शुध्यात् ।

अथ कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत् । 'शीकृ ७५ सेचने' । तालव्यादिः । 'दन्त्यादिः' इत्येके । शीकते । शिशीके । 'लोकृ ७६ दर्शने' । लोकते । लुलोके । 'श्लोकृ ७७ संघाते' । संघातो ग्रन्थः । स चेह ग्रथ्यमा-

---

**पाठान्तरमिति** ॥ पवर्गीयचतुर्थादिरित्यर्थ । **गडीति** । **वदनैकदेश इति** ॥ तत्क्रियाया-मित्यर्थ । गण्डति अगण्डीत् । **अन्तत्यादय इति** ॥ अति आदि बन्धने । इदि परमैश्वर्ये । बिदि अवयवे । गडि वदनैकदेशे । इति पञ्च धातवः तिङ्प्रकृतयो न भवन्तीति काश्यपमत-मित्यर्थ । **अन्य इति** ॥ काश्यपादन्ये मुनय तिङमपि एभ्य इच्छन्तीत्यर्थ. । **णिदीति** ॥ इदित्वान्नुम् । णोपदेशत्वात् णस्य नत्वम् । तदाह । **निन्दतीति । प्रणिन्दतीति** ॥ उपस-र्गादसमासेऽपीति णत्वम् । **टुनदीति** ॥ समृद्धि प्रजापश्वादिसम्पत्ति । **आदिरिति** ॥ भूवादयो धातव इत्यस्मात् धातव इत्यनुवृत्त षष्ठ्या विपरिणम्यते । उपदेशेऽजनुनासिक इत्य-स्मात् उपदेश इति इदिति चानुवर्तते । आदिरिति इदिति च बहुत्वे एकवचनम् । तदाह । **उपदेश इति** ॥ ड्वित्करण ड्वितोऽथुजित्येतदर्थम् । **नन्दतीति** ॥ इदित्वान्नुम् । **इदित्वा-दिति** ॥ आशीर्लिङि यासुट कित्वेऽपि इदित्वात् अनिदितामिति नलोपो नेत्यर्थः । **नन्द्यादि-ति** ॥ अन्त्यादन्यादित्यस्याप्युपलक्षणम् । **चदीति** ॥ इदित्वान्नुमित्याह । **चन्दतीति** । **त्रदी-ति** ॥ अदुपधोऽयम् । इदित्वान्नुमित्याह । **त्रन्दतीति** ॥ **क्रदिक्लदीति** ॥ अदु-पधौ । **क्लिदिपरिदेवन इति** ॥ अनुदात्तेत्सु पठितस्येह पाठ परस्मैपदार्थः । **शुन्धशुद्धाविति** ॥ अकर्मकोऽयम् । **शुन्धतीति** ॥ शुचिर्भवतीत्यर्थः । ननु शुधी-त्येवमिदिदेवाय कुतो न पठित इत्याह । **नलोप इति** ॥ आशीर्लिङि अनिदितामिति नलोपे शुध्यादिति रूपमिष्टम् । इदित्वेतु नलोपो न स्यादिति भाव । अथ कवर्गीयान्ता इत्यादि लोकृ इत्यन्त स्पष्टम् । **श्लोकृ इति** ॥ सङ्घातशब्द व्याचष्टे । **ग्रन्थ इति** ॥ ननु वाक्यसमुदायात्म-कस्य ग्रन्थस्य अक्रियात्वात् कथन्धात्वर्थत्वमित्याशङ्क्याह । स चेहेति ॥ ग्रन्थनङ्ग्रन्थः सङ्घीभावः स-ङ्घीकरणं वा । तत्र सङ्घीभवन सङ्घनिष्ठम् । सङ्घीकरणन्तु सङ्घीकर्तृनिष्ठम् । तत्र सङ्घीभवनार्थकत्वे

नस्य व्यापारो ग्रन्थितुर्वा । आद्येऽकर्मको द्वितीये सकर्मकः । श्लोकते । 'द्रेकृ ७८ ध्रेकृ ७९ शब्दोत्साहयोः' । उत्साहो वृद्धिरौद्धत्यं च । एच इग्घ्रस्वादेशे इति ह्रस्वः । दिद्रेके । दिध्रेके । 'रेकृ ८० शङ्कायाम्' । रेकते । 'सेकृ ८१ स्रेकृ ८२ स्रकि ८३ श्रकि ८४ श्लकि ८५ गतौ' । त्रयो दन्त्यादयः । द्वौ तालव्यादी । अषोपदेशत्वान्न षः । सिसेके । 'शकि ८६ शङ्कायाम्' । शङ्कते । शशङ्के । 'अकि ८७ लक्षणे' । अङ्कते । आनङ्के । 'वकि ८८ कौटिल्ये' । वङ्कते 'मकि ८९ मण्डने' । मङ्कते । 'कक ९० लौल्ये' लौल्यं गर्वश्चापल्यं च । ककते । चकके । 'कुक ९१ वृक ९२ आदाने' कोकते । चुकुके । वर्कते । ववृके ।

ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन ।

'चक ९३ तृप्तौ प्रतिघाते च' । चकते । चेके । 'ककि ९४ वकि ९५ श्वकि ९६ त्रकि ९७ ढौकृ ९८ त्रौकृ ९९ ष्वष्क १०० वस्क १०१ मस्क

अकर्मकः । सङ्घीकरणार्थत्वे सकर्मक इत्यर्थः । **श्लोकत इति** ॥ सङ्घीभवतीत्यर्थः । सङ्घीकरोतीति वा । **द्रेकृ ध्रेकृ इति** ॥ शब्दनम् शब्दः । **एच इति** ॥ लिट एकाच इति द्वित्वे हलादिःशेषे देद्रेक् ए इति स्थिते अभ्यासे एकारस्य ह्रस्वो भवन् एच इग्घ्रस्वादेश इति इकारो भवतीत्यर्थः । **दिध्रेके इति** ॥ अभ्यासे धकारस्य जश्त्वेन दकारः । एकारस्य तु ह्रस्व इकारः । **रेकृ इति** ॥ शङ्का सशयः आक्षेपोवा । शीकृ सेचने इत्यारभ्य एतत्पर्यन्ता ऋदितः । **सेकृ इति** ॥ आद्यौ एकारमध्यौ ऋदितौ । इतरे त्रयः अदुपधाः इदितः । **त्रय इति** ॥ पञ्चसु आद्यास्त्रय इत्यर्थः । **अषोपदेशत्वादिति** ॥ सेकृधातोः पर्युदासान्नषोपदेशत्वम् । द्वितीयतृतीययोस्तु दन्त्यात्परकसादित्वाभावान्न षोपदेशत्वम् । ततश्च सकारस्यादेशसकारत्वाभावान्न षत्वमिति भावः । एच इग्घ्रस्वादेश इत्यभिप्रेत्याह । **सिसेक इत्यादि** ॥ सिस्रङ्के इत्यादावपि इदित्वान्नुम् । **शकीति** ॥ इदित्वान्नुमित्याह । **शंकत इति** । **शशंक इति** । **अकीति** ॥ लक्षणमिह चिह्नीकरणम् । **अंकत इति** ॥ इदित्वान्नुम् । **आनंक इति** ॥ तस्मान्नुड्द्विहल इति नुट् । वकि कौटिल्ये इत्यादि स्पष्टम् । **कुकवृकेति** ॥ द्वितीयः ऋदुपधः । शपि लघूपधगुणं मत्वा आह । **कोकत इति** । **चुकुक इति** ॥ असंयोगादिति कित्वात् न लघूपधगुणः । अभ्यासे चुत्वम् । लघूपधगुणं रपरत्वं मत्वाऽऽह । **वर्कत इति** ॥ लिटि असंयोगादिति कित्वान्न गुण इति मत्वाऽऽह । **ववृके इति** ॥ उरदत्वं हलादिःशेषः । ननु कित्वात् परत्वात् गुणः स्यात् । कृते गुणे रपरत्वे संयोगात्परत्वेन कित्वस्याप्रवृत्त्या अनित्यत्वादित्यत आह । **ऋदुपधेभ्यो लिटः कित्वं गुणात् पूर्वविप्रतिषेधेनेति** । **चकेति** ॥ तृप्तावकर्मकः । प्रतिघाते सकर्मकः । एत्वाभ्यासलोपौ मत्वाऽऽह । **चेक इति** । **ककीति** ॥ एते पञ्चदश धातवः । आद्याश्चत्वार इदितः । द्वितीयो वकारादिः । तृतीयस्तालव्यादिः । पञ्चमषष्ठौ, दशमाद्याश्चत्वारश्च, ऋदितः । दशमद्वादशौ इदुपधौ । रघिलघी-

१०२ टिक्ृ १०३ टीकृ १०४ तिकृ १०५ तीकृ १०६ रघि १०७ लघि १०८ गत्यर्थाः'। कङ्कते। डुढौके। तुत्रौके।

**सुब्धातुष्ठिवुष्वक्कतीनां सत्वप्रतिषेधो वक्तव्यः।**

ष्वक्कते। षष्वक्के। अत्र तृतीयो दन्त्यादिः' इत्येके। टेकते। टीकते। एवं, तेकते। तीकते। लघिर्भोजननिवृत्तावपि। 'अघि १०९ वघि ११० मघि १११ गत्याक्षेपे'। आक्षेपो निन्दा। 'गतौ गत्यारम्भे च' इत्यन्ये। अङ्घते। आनङ्घे। वङ्घते। मङ्घते। 'मघि' कैतवे च। 'राघृ ११२ लाघृ ११३ द्राघृ ११४ सामर्थ्ये'। राघते। लाघते। 'ध्राघृ' इत्यपि केचित्। 'द्राघृ' आयामे च। आयामो दैर्घ्यम्। द्राघते। 'श्लाघृ ११५ कत्थने'। श्लाघते।

अथ परस्मैपदिनः पञ्चाशत्। 'फक्क ११६ नीचैर्गतौ' नीचैर्गतिर्मन्दगमनमसद्व्यवहारश्च। फक्कति। पफक्क। 'तक ११७ हसने'। तकति। 'तकि ११८ कृच्छ्रजीवने'। तङ्कति। 'बुक्क ११९ भषणे'। भषणं श्वरवः। बुक्कति। कख १२० हसने'। प्रनिकखति। 'ओखृ १२१ राखृ १२२ लाखृ १२३ द्राखृ १२४ ध्राखृ १२५ शोषणालमर्थयोः'। ओखति। ओखांचकार। 'शाखृ १२६ श्लाखृ १२७ व्याप्तौ'। शाखति। 'उख १२८ उखि १२९ वख

इदितौ चतुर्थान्तौ। कङ्कत इत्यादाविदित्वान्नुम्। **डुढौके, तुत्रौक इति**॥ अभ्यासे ढस्य जश्त्वेन डकार। ओकारस्य ह्रस्व उकारः। अथ ष्वक्कधातोः षोपदेशपरिगणनात् धात्वादेरिति सत्वे प्राप्ते आह। **सुब्धात्विति**। **षष्वक्के इति**॥ संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ न। सयोगात्परत्वेन लिट किल्वाभावाच्च। **तृतीय इति**॥ तथा च स्वक्कत इति रूपम्। केवलदन्त्यपरकसादित्वाभावेन षोपदेशत्वाभावः। **टेकते इति**॥ लघूपधगुणः। **टीकत इति**॥ दीर्घोपधत्वान्न गुणः। **एवन्तेकते, तीकत इति**॥ रङ्घते, लङ्घते। इदित्वान्नुम्। **लघिर्भोजननिवृत्तावपीति**॥ लङ्घते न भुङ्क्त इत्यर्थः। **अघीति**॥ त्रयोऽपि चतुर्थान्ता इदितः। **आनंघ इति**॥ तस्मान्नुड्द्विहल इति नुट्। **वंघत इति**॥ इदित्वान्नुम्। लिटि तु ववङ्घे इति रूपम्। वादित्वात्सयुक्तहल्मध्यस्थत्वात्सयोगात्परत्वेन लिटः कित्वाभावाच्च एत्वाभ्यासलोपौ न। **मघि कैतवेचेति**॥ कतैव वञ्चना। **राघृ इति**॥ त्रयोऽपि इदितः। सामर्थ्यं कार्यक्षमीभवनम्। **ध्राघृ इत्यपीति**॥ चतुर्थादिमपि केचित् पठन्तीत्यर्थः। **द्राघृ इति**॥ निवृत्तिः विमुखीभवनम्। आयामः दीर्घीभवनम्। **श्लाघृ कत्थन इति**॥ कत्थन स्तुतिः। शीकृ इत्यादयो द्विचत्वारिंशदात्मनेपदिनो गताः। फक्कनीचैरित्यादि स्पष्टम्। **प्रनिकखतीति**॥ शेषे विभाषेत्यत्र अकखादाविति पर्युदासान्नेणत्व नेति भावः। **ओखृ इति**॥ अलमर्थः भूषणक्रिया, पर्याप्तिः, वारणं वा। ओखति। ओखाञ्चकार। **शाखृश्लाखृ इति**॥ श्लाघृ इति चतुर्थान्त आ

१३० वखि १३१ मख १३२ मखि १३३ णख १३४ णखि १३५ रख १३६ रखि १३७ लख १३८ लखि १३९ इख १४० इखि १४१ ईखि १४२ वल्ग १४३ रगि १४४ लगि १४५ अगि १४६ वगि १४७ मगि १४८ तगि १४९ त्वगि १५० श्रगि १५१ श्लगि १५२ इगि १५३ रिगि १५४ लिगि १५५ गत्यर्थाः । कवर्गद्वितीयान्ताः पञ्चदश । तृतीयान्तास्त्रयोदश । इह खान्तेषु 'रिख' 'त्रख' 'त्रिखि' 'शिखि' इत्यपि चतुरः केचित्पठन्ति ओखति ।

## २२९० । अभ्यासस्यासवर्णे । (६-४-७८)

इवर्णोवर्णान्तस्य अभ्यासस्येयङुवङौ स्तोऽसवर्णेऽचि । उवोख । संनिपातपरिभाषया 'इजादेः—' (२२३७) इत्याम्न । ऊखतुः । ऊखुः । इह सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्ध्रस्वः प्राप्तो न भवति । सकृत्प्रवृत्तत्वात् । आङ्गत्वाद्धि पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घः ।

---

त्मनेपदिषु गतः । **उख उखीति । पञ्चदशेति** ॥ इगि इत्यन्ता इति शेषः । **त्रयोदशेति** ॥ वल्गादय इति शेषः । तत्र इदित्वान्नुम् । आशीर्लिङि नलोपाभावश्च । **पठन्तीति** ॥ तेषां मते खान्ता एकोनविंशतिरिति बोध्यम । **ओखतीति** ॥ शपि लघूपधगुणः । लिटि णलः पित्वेन कित्वाभावात् प्राप्तस्यापि लघूपधगुणस्य द्विर्वचनेऽचीति निषिद्धतया गुरुमत्वाभावादाम भावे सति पूर्वन्द्वित्वे कृते हलादिः शेषे पश्चात् वार्णादाङ्गम्बलीय इति परिभाषया अन्तरङ्गमपि सवर्णदीर्घम्बाधित्वा लघूपधगुणे कृते उ ओख् अ इति स्थिते, उवर्णस्य यणि प्राप्ते । **अभ्यासस्येति** ॥ अचि श्नुधात्वित्यतः अचीति, य्वोरियङुवङाविति चानुवर्तते । इश्च उश्च य्वौ तयोरिति विग्रहः । अभ्यासविशेषणमिद तदन्तविधिः । तदाह । **इवर्णोवर्णान्तस्येति** ॥ ङित्वादन्तादेशौ । **उवोखेति** ॥ अचिश्नुधात्वित्यस्यतु नात्र प्राप्तिः । अजादौ प्रत्यये परत एव तत्प्रवृत्तेः । अभ्यासस्य अङ्गत्वाभावाच्च । ननु द्वित्वे कृते लघूपधगुणे सति इजादिगुरुमत्त्वादाम् स्यादित्यत आह । **सन्निपातेति** ॥ णलि परे विहितगुणसम्पन्नमिजादि-गुरुमत्वमाश्रित्य प्रवृत्तमामं गुणो न प्रवर्त्तयति । आमि सति धातोर्णल्परकत्वव्याघातादिति भावः । **ऊखतुरिति** ॥ अपित्त्वेन कित्वात् लघूपधगुणाभावे द्वित्वे हलादिशेषे सवर्णपरकत्वादभ्यासस्यासवर्ण इति इयङभावे सवर्णदीर्घे रूपमिति भावः । ननु ऊखतुरित्यत्र ऊकारस्य सवर्णदीर्घसम्पन्नस्य एकादेशतया पूर्वान्तत्वेनाभ्याससम्बन्धित्वात् ह्रस्व इत्यभ्यासस्याचो विधीयमानो ह्रस्वः प्राप्नोतीत्याशङ्कते । **इह सवर्णदीर्घस्य अभ्यासग्रहणेन ग्रहणाद्ध्रस्वः प्राप्त इति** ॥ अथ परिहरति । **न भवतीति** ॥ कुत इत्यत आह । **सकृत्प्रवृत्तत्वादिति** ॥ तदेवोपपादयति । **आंगत्वादिति** ॥ उ उखतुरिति स्थिते पर्जन्यवल्लक्षणप्रवृत्त्या अभ्यासह्रस्वे सवर्णदीर्घे ऊखतुरिति स्थितिः । तत्र ऊकारस्य पुनरभ्यासह्रस्वो न भवति । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरिति न्यायादित्यर्थः । हलादिशेषे ह्रस्वे न कृते पश्चात्प्रवर्तमानस्य

'वार्णादाङ्गं बलीयः' इति न्यायात्परत्वाच्च। उङ्खति। ववाख। ववखतुः। वङ्खति। मेखतुः। मङ्खति। ममङ्ख। नखति। नङ्खति। रखति। रेखतुः। रङ्खति। एखति। इङ्खति। ईङ्खति। वल्गति। रङ्गति। लङ्गति। अङ्गति। वङ्गति। मङ्गति। तङ्गति। त्वङ्गति। श्रङ्गति। श्लङ्गति। इङ्गति। रिङ्गति। लिङ्गति। रेखति। त्रखति। त्रिङ्खति। शिङ्खति। 'त्वगि' कम्पने च। 'युगि १५६ जुगि १५७ बुगि १५८ वर्जने'। युङ्गति। 'घघ १५९ हसने'। घघति। जघाघ। 'मघि १६० मण्डने'। मङ्घति। 'शिघि १६१ आघ्राणे'। शिङ्घति।

अथ चवर्गीयान्ताः। तत्रानुदात्तेत एकविंशतिः।। 'वर्च १६२ दीप्तौ'। वर्चते। 'षच १६३ सेचने, सेवने च'। सचते। सेचे। सचिता। 'लोचृ १६४

---

सवर्णदीर्घस्य पूर्वम्पूर्वमन्तरङ्गम्परम्पर बहिरङ्गमिति न्यायेन बहिरङ्गत्वादित्यलम्। **उंखतीति**॥ इदित्वान्नुम्। **ववाखेति**॥ वखधातोर्णलि उपधावृद्धिः। **ववखतुरिति**॥ वादित्वादेत्वाभ्यासलोपौ न। **वंखतीति**॥ वखिधातोरिदित्वान्नुम्। ववङ्ख। **मेखतुरिति**॥ एत्वाभ्यासलोपौ। **मङ्खतीति**॥ मखिधातोरिदित्वान्नुम्। **ममंखेति**॥ सयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ न। **नखति, नंखतीति**॥ णोन इति नत्वम्। **रखतीति**॥ णलि तु उपधावृद्धि। रराख अतुसादावेत्वाभ्यासलोपौ। **रेखतुरित्यादि**। **रंखतीति**॥ इदित्वान्नुम्। ररङ्ख। **एखतीति**॥ इखधातोश्शपि लघूपधगुणः। इयेख। ईखतु। **इंखतीति**॥ इदित्वान्नुम्। इङ्खाञ्चकार। **ईंखतीति**॥ अलघूपधत्वान्न गुणः। ईखांचकार। **वल्गतीति**॥ लिटि ववल्ग ववल्गतुः। **रंगति, लंगतीति**॥ ररङ्गतु। **अंगतीति**॥ लिटि आनङ्ग। **वंगतीति**॥ लिटि ववङ्ग ववङ्गतुः। **मंगतीति**॥ लिटि ममङ्ग ममङ्गतु। **तंगतीति**॥ लिटि, ततङ्ग, ततङ्गतु। **त्वंगतीति**॥ लिटि तत्वङ्ग। तत्वङ्गतु। **श्रंगतीति**॥ लिटि शश्रङ्ग। शश्रङ्गतुः। **श्लंगतीति**॥ लिटि शश्लङ्ग शश्लङ्गतुः। **इंगतीति**॥ लिटि इङ्गाचकार। **रिंगतीति**॥ लिटि रिरिङ्ग रिरिङ्गतु। **लिंगतीति**॥ लिटि लिलिङ्ग लिलिङ्गतु। अथ खान्तेषु रिखादिचतुर्णां मतान्तरसिद्धानामुदाहरणमाह। **रेखतीति**॥ शपि लघूपधगुण। रिरेख रिरिखतु। **त्रखतीति**॥ लिटि तत्राख तत्रखतु। **त्रिंखतीति**॥ लिटि तित्रिङ्ख तित्रिङ्खतु। **शिंखतीति**॥ लिटि शिशिङ्ख शिशिङ्खतु। **त्वगि कम्पने चेति**॥ चाद्गतौ। त्वङ्गति तत्वङ्ग। **युगीति**॥ त्रयोऽपि इदितः। युङ्गति बुङ्गति जुङ्गति। **घघ, हसने इति**॥ घघति। णलि उपधावृद्धिः। जघाघ जघघतु। लिण्णिमित्तादेशादित्वादेत्वाभ्यासलोपौ न। **मघिमण्डन इति**॥ इदित्वान्नुमित्याह। **मंघतीति**॥ ममङ्घ ममङ्घतु। **शिघि आघ्राण इति**॥ शिङ्घति शिशिङ्घ। फकादयः पञ्चाशद्गताः। **वर्च दीप्ताविति**॥ दीप्ति प्रकाश। **षच, सेचन इति**॥ अच्परकसादित्वात् षोपदेशोऽयम्। स्वरितेत्तु षच समवाय इति वक्ष्यते। **सेच इति**॥ सत्वस्य लिण्णिमित्तत्वाभावादादेशादित्वेऽपि एत्वाभ्यासलोपौ। **दम्भः**

दर्शने'। लोचते। लुलोचे। 'शच १६५ व्यक्तायां वाचि' शेचे। 'श्वच १६६ श्वचि १६७ गतौ'। श्वचते। श्वञ्चते। 'कच १६८ बन्धने'। कचते। 'कचि १६९ काचि १७० दीप्तिबन्धनयोः'। चकञ्चे। चकाञ्चे। 'मच १७१ मुचि १७२ कल्कने' कल्कनं दम्भः, शाठ्यं च। 'कथनम्' इत्यन्ये। मेचे। मुमुञ्चे। 'मचि १७३ धारणोच्छ्रायपूजनेषु'। ममञ्चे। 'पचि १७४ व्यक्तीकरणे'। पञ्चते। 'ष्टुच १७५ प्रसादे'। स्तोचते। तुष्टुचे। 'ऋज १७६ गतिस्थानार्जनोपार्जनेषु'। अर्जते। नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते। तेन द्विहल्त्वान्नुट्। आनृजे। 'ऋजि १७७ भृजी १७८ भर्जने'। ऋञ्जते। 'उपसर्गादृति—' (७४) इति वृद्धिः। प्रार्ञ्जते। ऋञ्जांचक्रे। आर्ञ्जिष्ट। भर्जते। बभृजे। अभर्जिष्ट। 'एजृ १७९ भ्रेजृ १८० भ्राजृ १८१ दीप्तौ'। एजांचक्रे। 'ईज १८२ गतिकुत्सनयोः'। ईजांचक्रे।

**शाठ्यंचेति** ॥ परविस्रम्भार्थमधर्माद्याचरणं दम्भः। कापट्यापरपर्यायः। 'कपटोऽस्त्री व्याजदम्भोपधयः' इत्यमरः। शाठ्यं कुटिलभावः। 'निकृतस्त्वनृजुः शठः' इत्यमरः। **पचि व्यक्तीकरण इति** ॥ पचि विस्तार इति चुरादौ वक्ष्यते। **ष्टुच प्रसाद इति** ॥ ष्टुत्वसम्पन्नः टकारः। ततश्च दन्त्यपरकसादित्वात् षोपदेशोऽयम्। **स्तोचत इति** ॥ षस्य सत्वे सति ष्टुत्वं निवर्तत इति भावः। **तुष्टुचे इति** ॥ शर्पूर्वाः खय इति तकारशेषः। आदेशसकारत्वात् षत्वम्। **ऋज गतीति** ॥ आर्जनम् सम्पादनम्। उपार्जनम् सेवनम्। **अर्जत इति** ॥ शपि लघूपधगुणः। रपरत्वम्। **नुड्विधाविति** ॥ वार्तिकमिदम्। **आनृज इति** ॥ लिटः असंयोगादिति कित्वात् गुणाभावे द्वित्वे उरदत्वे रपरत्वे हलादिशेषे अत आदेरिति दीर्घे नुडिति भावः। **ऋजिभृजी इति** ॥ ऋदुपधौ द्वौ। आद्यः इदित्। द्वितीयस्तु ईदित्वात् श्वीदितो निष्ठायामिति नेट्। इदित्वान्नुम्। अनुस्वारपरसवर्णौ। **ऋञ्जाञ्चक्र इति** ॥ नुमि सति संयोगे गुर्विति ऋकारस्य गुरुत्वादिजादेश्चेत्याम्। ऋञ्जिता। ऋञ्जिष्यते। ऋञ्जताम्। आर्ञ्जत। ऋञ्जेत। ऋञ्जिषीष्ट। अथ लुङि रूपम् दर्शयति। **आर्ञ्जिष्टेति** ॥ लुङः तादेशः। च्लिः। सिच्। इट्। लघूपधत्वाभावान्न गुणः। आट्। वृद्धिः। षत्वं। ष्टुत्वं। लृङि, आर्ञ्जिष्यत। **भर्जत इति** ॥ शपि लघूपधगुणः। रपरत्वम्। बभृजे। भर्जिता। भर्जिष्यते। भर्जताम्। अभर्जत। भर्जेत। भर्जिषीष्ट। लुङि रूपमाह। **अभर्जिष्टेति** ॥ लङस्तादेशः च्लिः सिच् इट् गुणः रपरत्वम् अडागमः षत्वं ष्टुत्वं। लृङि अभर्जिष्यत। **एजृभ्रेजृभ्राजृ इति** ॥ आद्ययोः ऋदित्वम् नाग्लोपीत्यर्थम्। तृतीयस्य तु अकारेत्कत्वेऽप्यात्मनेपदं सिध्यति। ऋदित्वस्य न किञ्चित्फलमस्ति। न च नाग्लोपीति चङ्परे णौ उपधाह्रस्वः फलम्भवितुमर्हति। भ्राजभासेत्यादिना तत्र उपधाह्रस्वविकल्पस्य वक्ष्यमाणत्वात्। **ईजगतीति** ॥ अलघूपधत्वान्नगुणः। ईजते। **ईजाञ्चक्र इति** ॥ इजादेश्चेत्याम्।

अथ द्विसप्ततिर्व्रज्यन्ताः परस्मैपदिनः । 'शुच १८३ शोके'। शोचति । 'कुच १८४ शब्दे तारे'। कोचति। 'कुञ्च १८५ क्रुञ्च १८६ कौटिल्याल्पीभावयोः'। 'अनिदिताम्–'(४१५) इति न लोपः । कुच्यात् । कुञ्च्यात् । 'लुञ्च १८७ अपनयने। लुच्यात्। 'अञ्चु १८८ गतिपूजनयोः'। अच्यात्। गतौ न लोपः। पूजायां तु अञ्च्यात्। 'वञ्चु १८९ चञ्चु १९० तञ्चु १९१ त्वञ्चु १९२ म्रुञ्चु १९३ म्लुञ्चु १९४ म्रुचु १९५ म्लुचु १९६ गत्यर्थाः'। वच्यात्। चच्यात्। तच्यात्। त्वच्यात्। अम्रुञ्चीत्। अम्लुञ्चीत्।

२९१। जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च। (३-१-५८)

एभ्यश्च्लेरङ् वा स्यात्। अम्रुचत् - अम्रोचीत्। अम्लुचत् - अम्लोचीत्। 'ग्रुचु १९७ ग्लुचु १९८ कुजु १९९ खुजु २०० स्तेयकरणे'। जुग्रोच। अग्रुचत्-

---

वर्चादय एकविंशतिः वृत्ताः। **द्विसप्ततिरिति** ॥ चवर्गीयान्ता इति शेषः। **शुच शोक इति** ॥ स्मृत्वा क्लेशः शोकः। **शोचतीति** ॥ वियुक्तं पित्रादिकं स्मृत्वा क्लिश्नातीत्यर्थः। **कुचशब्द इति** ॥ शब्दनं शब्दः। चुकोच। चुकुचतुः। अकोचीत्। **कुञ्च, क्रुञ्चेति** ॥ उभावपि चवर्गपञ्चमोपधौ। अनुस्वारपरसवर्णसम्पन्नस्य नकारस्थानिकञकारस्य धातुपाठे निर्देशः। धातुपाठे नकारजावनुस्वारपञ्चमावित्यभियुक्तवादात्। तदाह। **अनिदितामिति** ॥ अनुस्वारपरसवर्णयोरसिद्धतया नकारस्य सत्वेन आशीर्लिङि अनिदितामिति लोपे कुच्यादिति रूपमित्यर्थः। लिटि तु, चुकुञ्च चुकुञ्चतुरित्यादौ पित्वेन संयोगात्परत्वेन च, कित्वाभावान्नलोपो न भवति। क्रुञ्चधातुस्तु स्वाभाविकञकारोपध एव। नत्वनुस्वारपरसवर्णसम्पन्नञकारोपध इति परेश्वघाङ्कयोरिति सूत्रे भाष्यकैयटयोः स्थितम्। अतस्तस्याशीर्लिङि अनिदितामिति नलोपस्य न प्रसक्तिरित्यभिप्रेत्योदाहरति। **कुञ्च्यादिति** ॥ ञकाररहितपाठस्तु प्रामादिक इति शब्देन्दुशेखरे स्थितम्। **लुञ्चेति** ॥ अयमपि नोपधः। अनुस्वारपरसवर्णसम्पन्नस्य ञकारस्य निर्देशः। तथा च आशीर्लिङि अनिदितामिति नलोपः। तदाह। **लुच्यादिति** ॥ एवमञ्चुधातोरपि द्रष्टव्यम्। **पूजायान्त्विति** ॥ नाञ्चेः पूजायामिति निषेधादिति भावः। **वञ्चुचञ्चुतञ्चु इति** ॥ आद्याः षट् नोपधाः। अनुस्वारपरसवर्णाभ्यां ञकारनिर्देशः। तथा च तेषामाशीर्लिङि अनिदितामिति नलोपः। तदाह। **वच्यादिति** ॥ लुङि अम्रुञ्चीदम्लुञ्चीदिति नोपधयो रूपं। सिज्लोपः। **जॄस्तंभ्विति** ॥ च्लेः सिजित्यतः च्लेरिति, अस्यतिवक्तिख्यातिभ्य इत्यतः अङिति, इरितोवेत्यतः वेतिचानुवर्तते। तदाह। **एभ्यश्च्लेरङ्वेति** ॥ जॄष् वयोहानौ। स्तन्भु सौत्रो धातुः। म्रुचुम्लुचुगत्यर्थौ। ग्रुचु ग्लुचु स्तेयकरणे। ग्लुञ्चु गतौ। इत्येभ्य इत्यर्थः। **अम्रुचदिति** ॥ च्लेरङि सति ङित्वान्नलघूपधगुणः। **अम्रोचीदिति** ॥ अङभावे इटईटि इति सिज्लोपः। **ग्रुचुग्लुचु इति** ॥ जॄस्तन्भ्वाति अङ्वेत्याह। **अग्रुचदग्रोचीदिति** ॥ आद्यस्य रूपे। अथ द्वितीयस्य अङ्विकल्पमु-

अग्रोचीत्। जुग्लोच । अग्लुचत् - अग्लोचीत् । अक्रोजीत् । अग्लोजीत् । 'ग्लुञ्चु २०१ षस्ज २०२ गतौ'। लुङि अङ्वा। अग्लुचत् - अग्लुञ्चीत्। सस्य श्चुत्वेन शः, तस्य जश्त्वेन जः। सज्जति। अयमात्मनेपद्यपि। सज्जते। 'गुजि २०३ अव्यक्ते शब्दे'। गुञ्जति गुञ्ज्यात्। 'अर्च पूजायाम्'। आनर्च। 'म्लेच्छ २०५ अव्यक्ते शब्दे'। अस्फुटेऽपशब्दे चेत्यर्थः। म्लेच्छति। मिम्लेच्छ। 'लछ २०६ लाछि २०७ लक्षणे'। ललच्छ ललाञ्छ। 'वाछि २०८ इच्छायाम्'। वाञ्छति। 'आछि २०९ आयामे' आञ्छति। 'अत आदेः' (२२४८) इत्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम्। तेन दीर्घाभावान्न नुट्। आञ्छ। तपरकरणं मुखसुखार्थमिति मते तु नुट्। आनाञ्छ। 'ह्रीच्छ २१० लज्जायाम्'। जिह्रीच्छ। 'हुर्च्छा २११ कौटिल्ये'। 'कौटिल्यमपसरणम्' इति मैत्रेयः। 'उपधायां च' (२२६५) इति दीर्घः। हूर्च्छति। 'मुर्छा २१२ मोहसमुच्छ्राययोः'। मूर्च्छति। 'स्फुर्छा २१३ विस्तृतौ'। स्फूर्च्छति। 'युच्छ २१४ प्रमादे'। युच्छति। 'उछि २१५ उञ्छे'। 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति

दाहरति। **अग्लुचदग्लोचीदिति** ॥ अङि सति ङित्त्वान्न लघूपधगुणः। अङभावे सिज्लोपः। **ग्लुञ्चुषस्जेति** ॥ आद्यो नोपधः। द्वितीयस्तु षोपदेशः। अनुपरकत्वादित्त्वात्। तत्र आद्यस्य लुङि विशेषमाह। **अङ्वेति** ॥ जृस्तम्भ्विति अनेनेति शेषः। ग्लुचुग्लुञ्च्वोः पृथग्ग्रहणसामर्थ्यात् नलोपो नेति वृत्तिकृत्। **सस्येति** ॥ धात्वादेः सत्त्वे सस्ज इति स्थिते। द्वितीयस्य सकारस्य श्चुत्वेन शकार इत्यर्थः। **तस्येति** ॥ शकारस्य झलां जशोऽन्ते इति जकार इत्यर्थः। **गुजीति** ॥ इदित्त्वादाशीर्लिङि नलोपो नेत्याह। **गुञ्ज्यादिति**। **अर्चेति** ॥ लिटि तस्मान्नुड्द्विहल इति नुटं मत्वाऽऽह। **आनर्चेति** ॥ म्लेच्छेत्यादि स्पष्टम्। तुकि म्लेच्छतीति रूपम्। ललच्छ ललच्छतुः। **आञ्छीति** ॥ लिटि णलि द्वित्वे हलादिशेषे अभ्यासह्रस्वे अ आञ्छ् अ इति स्थिते अत आदेरिति दीर्घः। तस्मान्नुड्द्विहल इति नुटमाशङ्क्याह। **अत आदेरिति** ॥ तत्र हि दीर्घस्याकारस्य दीर्घविधौ प्रयोजनाभावादेव ह्रस्वाकारस्य दीर्घ इति सिद्धौ अत इति तपरकरणं स्वाभाविकस्यैव ह्रस्वाकारस्य परिग्रहार्थमित्यर्थः। ततः किमित्यत आह। **तेनेति** ॥ अत आदेरिति दीर्घविधौ स्वाभाविकह्रस्वाकारस्यैव ग्रहणेन अत आदेरिति दीर्घस्याभावान्न नुडित्यर्थः। **आञ्छेति** ॥ द्वित्वे हलादिशेषे अभ्यासह्रस्वे सवर्णदीर्घ इति भावः। **मुखसुखार्थमिति** ॥ तथा च। ह्रस्वस्थानिकदीर्घाकारादपि परस्य नुड् भवत्येवेति भावः। ह्रीच्छ लज्जायामित्यादि स्पष्टम्। **युच्छप्रमाद इति** ॥ यकारादिरुदुपधोऽयम्। **युच्छतीति** ॥ अन्तरङ्गत्वात् छे चेति तुकि लघूपधत्वाभावात् न गुणः। युयुच्छ। युयुच्छतुः। **उछि उञ्छ इति** ॥ अयमप्युदुपधः।

यादवः। उञ्छति। उञ्छांचकार। 'उछी २१६ विवासे'। विवासः समाप्तिः। प्रायेणायं विपूर्वः। व्युच्छति। धृज २१७ धृजि २१८ ध्रज २१९ ध्रजि २२० ध्वज २२१ ध्वजि २२२ गतौ'। धर्जति। धृञ्जति। ध्रजति। ध्रञ्जति। ध्वजति। ध्वञ्जति। 'कूज। २२३ अव्यक्ते शब्दे'। चुकूज। 'अर्ज २२४ षर्ज २२५ अर्जने'। अर्जति। आनर्ज। सर्जति। ससर्ज। 'गर्ज २२६ शब्दे'। गर्जति। 'तर्ज २२७ भर्त्सने'। तर्जति। ततर्ज। 'कर्ज २२८ व्यथने'। चकर्ज। 'खर्ज २२९ पूजने च' चखर्ज। 'अज २३० गतिक्षेपणयोः'। अजति।

## २२९२। अजेर्व्यघञपोः। (२-४-५६)

अजेर्वी इत्ययमादेशः स्यादार्धधातुकविषये घञमपं च वर्जयित्वा। 'वलादावार्धधातुके वेष्यते'। विवाय। विव्यतुः। विव्युः। अत्र वकारस्य हल्प-

---

**उञ्छतीति** ॥ इदित्वान्नुमि अलघूपधत्वान्नगुणः। **उञ्छाञ्चकारेति** ॥ नुमिकृते सयोगे गुर्वित्यकारस्य गुरुत्वादिजादेश्चेत्यामिति भाव.। **धृजेति** ॥ आद्यौ ऋदुपधौ। इतरे चत्वारः अदुपधाः। द्वितीयचतुर्थषष्ठाः इदित। **धर्जतीति** ॥ शपि लघूपधगुण। रपरत्वम्। दधर्ज। दधृजतुः। धृज्यात्। अधर्जीत्। **धृञ्जतीति** ॥ इदित्वान्नुम्। दधृञ्ज। इदित्वान्नलोपो न। धृञ्ज्यात्। अधृञ्जीत्। **ध्रजतीति** ॥ णलि दध्राज। दध्रजतु। अध्राजीत्। अध्रजीत्। **ध्रञ्जतीति** ॥ अदुपधोऽयम्। दध्रञ्ज। इदित्वान्नलोपो न। दध्रञ्जतुः। **ध्वजतीति** ॥ दध्वाज। **ध्वञ्जतीति** ॥ दध्वञ्ज। **कूज अव्यक्त इति** ॥ स्पष्टम्। सर्जतीत्यत्र षोपदेशत्वात् सत्वम्। **अजगतीति** ॥ लटि अजतीत्यादि सिद्धवत्कृत्य लिटि विशेषमाह। **अजेर्व्यघञपोरिति** ॥ वी इति दीर्घान्त लुप्तप्रथमाकम्। आर्धधातुक इत्यधिकृतम्। विषयसप्तम्येषा। नतु परसप्तमी। व्याख्यानात्। तदाह। **आर्धधातुकविषय इत्यादि** ॥ अजेरिति इका निर्देशः। अजधातोरित्यर्थ। आर्धधातुक इति परसप्तम्याश्रयणेतु वेवीयत इति न स्यात्। वीभावात्प्राक् हलादित्वाभावात् यङसम्भवात्। विषयसप्तम्याश्रयणेतु यङि विवक्षिते वीभावे सति हलादित्वाद्यङ्निर्बाध.। अघञपोः किम्। घञि समाजः। समुदोरज.पशुष्वित्यपि। समज। अत्र अघञपोरिति न वक्तव्यम्। लिटिवेत्यतो वेत्यनुवर्त्तते। व्यवस्थितविभाषेयम्। घञि अपिच न भवति। ल्युटि वलादावार्धधातुके च विकल्पः। अन्यत्रतु आर्धधातुके नित्यमिति भाष्यकैय्यटयो. स्थितम्। तदाह। **वलादावार्धधातुके वेष्यत इति** ॥ उक्तव्यवस्थितविभाषोपलक्षणमिदम्। **विवायेति** ॥ लिटो णलि विवक्षिते वीभावे सति णलि द्वित्वे अभ्यासह्रस्वे अचोञ्णितीति वृद्धौ आयादेश इति भाव.। **विव्यतुरिति** ॥ वीभावे सति अतुसि द्वित्वे अभ्यासह्रस्वे असयोगादिति कित्वात् गुणाभावे इयडपवादे एरनेकाच इति यणि रूपम्। एव उसि विव्युरिति रूपम्। ननु विव्यतुः विव्युरित्यत्र द्वितीयवकारस्य यकारात्मकहल्परकत्वादुपधायाश्चेति इकारस्य दीर्घः स्यादित्याशङ्क्यम्। ईकार-

रत्वात् 'उपधायां च' (२२६५) इति दीर्घे प्राप्ते 'अचः परस्मिन्–' (५०) इति स्थानिवद्भावेनाच्परकत्वम्। न च 'न पदान्त–' (५१) इति निषेधः। 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इत्युक्तेः। थलि 'एकाचः–' (२२४६) इतीण्णिषेधे प्राप्ते।

## २२९३ । कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि । (७-२-१३)

एभ्यो लिट इण्णस्यात्। क्रादीनां चतुर्णां ग्रहणं नियमार्थम्। प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्णिषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्य इति। ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वसादिषु क्रादिनियमप्रापितस्यचेटो निषेधार्थम्।

स्थानिकस्य यकारस्य अचः परस्मिन्निति स्थानिवत्त्वेन द्विर्नीयवकारस्य हलपरकत्वाभावात् तस्मिन्वकारे परे इकारस्य न दीर्घ इति परिहरन्ति। **अत्रवकारस्येत्याद्यच्परकत्वमित्यन्तम्** ॥ ननु दीर्घविधौ नपदान्तेति निषेधात्कथमिह यकारस्य स्थानिवत्त्वमित्याशङ्क्य निराकरोति। नचन-पदान्तेति निषेध इति। शङ्क्य इति शेषः। कुत इत्यत आह। **स्वरदीर्घेति**। **इत्युक्तेरिति** ॥ वार्त्तिककृतेति शेषः। **थलि एकाच इति** ॥ अजधातोरनुदात्तोपदेशानन्तर्भावेऽपि वी इति तदादेशोऽनुदात्तः अजन्तेषु ऊदॄदन्तादिचतुर्दशधातूनामनुदात्तत्वाभ्युपगमादिति भावः। **कृसृ इति** ॥ कृ सृ भृ वृ स्तु द्रु स्रु श्रु इत्यष्टाना समाहारद्वन्द्वात्पञ्चमी। लिटीति षष्ठ्यर्थे सप्तमी। नेड्वशिकृतीत्यतो नेति इडितिचानुवर्तते। तदाह। **एभ्य इति** ॥ नन्वेकाच उपदेशेऽनुदात्तादिति श्र्युकः कितीतिच सिद्धे किमर्थमिद सूत्रमित्यत आह। **क्रादीनामिति** ॥ कृ सृ भृ वृ इत्येषां ग्रहणमित्यर्थः। नियमस्वरूपमाह। **प्रकृत्याश्रय इत्यादि** ॥ कृसृभृवृ इत्येषां त्रयाणां अनुदात्तोपदेशान्तर्भूतानामेकाच उपदेश इति यः प्रकृत्याश्रयो निषेधः, यश्च वृधातोः श्र्युकः कितीति प्रत्याश्रयोनिषेधः' तदुभयमपि यदि लिटि स्यात् तर्हि कृसृभृवृ इत्येभ्य एव परस्य लिटो भवति। नतु तदन्येभ्यः परस्येत्यर्थं। तेन बिभिदिव बिभिदिमेत्यादौ एकाच उपदेश इति निषेधः। बभूवेत्यादौ श्र्युकः कितीति निषेधश्च न भवति। अथ स्तुद्रुस्रुश्रुवाङ्ग्रहणस्य प्रयोजनमाह। **तत इति** ॥ अन्येषामिति शेषः। **चतुर्णामिति** ॥ ग्रहणमिति शेषः। ततः तेभ्यः कृसृभृवृ इत्येभ्यः अन्येषां स्तुद्रुस्रुश्रुवाङ्ग्रहणं। थलि तुष्टोथ दुद्रोथ सुस्रोथ शुश्रोथ इत्यत्र ऋतो भारद्वाजस्येति वक्ष्यमाणेन ऋदन्तस्यैव थलि नेट्। अन्यस्य तु स्यादेवेति नियमेन प्राप्तस्य इण्णिषेधार्थम्। तथा तुष्टुव तुष्टुमेत्यादौ कृसृभृवृ इत्युक्तेन क्रादिभ्य एव परस्य लिट इण्णिषेधः। अन्येभ्यस्तु परस्य इट् स्यादेवेति नियमेन प्राप्तस्य इटो निषेधार्थमित्यर्थः। तदेवमजेस्थलि वीभावे एकाच इति निषेधाभावादिडागमो निर्बाध इति स्थितम्। अथ तस्य थलि इडागमस्य भारद्वाजनियमाद्विकल्पं

## २२९४ । अचस्तास्वत्थल्यनिटो नित्यम् । (७-२-६१)

उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्णस्यात् ।

## २२९५ । उपदेशेऽत्वतः । (७-२-६२)

उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्णस्यात् ।

## २२९६ । ऋतो भारद्वाजस्य । (७-२-६३)

तासौ नित्यानिट ऋदन्तस्यैव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य स्यादेव । अयमत्र संग्रहः—

---

वक्ष्यन् तदुपयोगित्वेन सूत्रद्वयमुपन्यस्यति । **अचस्तास्वदिति** ॥ अधातोस्थलभावाद्धातोरिति लभ्यते । अच इति तद्विशेषणम् । तदन्तविधिः । उपदेशेऽत्वत इत्युत्तरसूत्रादुपदेश इत्यपकृष्यत इति ऋतोभारद्वाजस्येति सूत्रभाष्ये स्थितम् । उपदेशे अजन्तादित्यन्वयः । अनिट इति बहुव्रीहेः पञ्चमी । नित्यमिड्विहीनादित्यन्वयः । तासि च क्लृप इत्यतस्तासीत्यनुवर्तते । तासौ नित्यमनिट इत्यन्वयः । थलीति षष्ठ्यर्थे सप्तमी । गमेरिट् परस्मैपदेष्वित्यत इडिति, नवृद्भ्यश्चतुर्भ्य इत्यतो नेति चानुवर्तते । **उपदेशे योऽजन्त इत्यादि । इण्णस्यादिति** ॥ तास्वदिति शेषः । सप्तम्यन्ताद्वतिः । यथा तासि नेट् तथा थल्यपि नेट् इत्यर्थः । चिचेथ, जुहोथेत्याद्युदाहरणम् । अत्र क्रादिनियमप्राप्त इण्णभवति । अजन्तात्किम् । बिभेदिथ । उपदेश इति किम् । हृञ् जहर्थ । इह गुणे रपरत्वे अजन्तत्वाभावादिण्णिषेधो नस्यादित्युपदेशग्रहणम् । नित्यग्रहणङ्किम् । स्वृ गतौ, सस्वरिथ । स्वरतिसूतीति तासौ विकल्पितेट्कत्वान्न निषेधः । तासौ किम् । लुलुविथ । थलः किम् । पपिव । पपिम । इह तासीत्यनुवृत्त्यैव सिद्धेस्तास्वदिति नातीवोपयुज्यते इति केचित् । वस्तुतस्तु यस्तासौ विद्यते तस्मादेव परस्य थल इण्णिषेधार्थन्तास्वदित्यावश्यकम् । तेन लिट्यन्यतरस्यामित्यतो घस्लृभावे जघसिथेत्यत्र न निषेधः । घसस्तासावभावादिति अद भक्षण इति धातौ मूल एव वक्ष्यते । यस्तासावस्ति अनिट्चेति भाष्यम् । **उपदेशेऽत्वतः इति** ॥ अत्वत इति छेदः । अत् ह्रस्वाकारः सः अस्य अस्तीति अत्वान् । तसौ मत्वर्थ इति भत्वान्न जश्त्वम् । अच इति वर्जम् पूर्वसूत्र, तत्र यदनुवृत्तन्तदप्यनुवर्तते । तदाह । **उपदेशे अकारवत इति** । शक्लृ शशक्थ । पच् पपक्थेत्युदाहरणम् । अथ क्रादिनियमप्राप्त इण्णभवति । उपदेशे किम् । कृष विलेखने । चकर्षिथ । अत्वत इति किम् । बिभेदिथ । तपर.किम् । रराधिथ । तासौ किम् । जगर्हिथ । जिघृक्षतीत्यादौ सनिग्रहगुहोश्चेति सनि नित्यमनिट् । नतु तासौ । नित्येति किम् । अञ्ज आनञ्जिथ । ऊदित्वात्तासौ वेडिति भाष्यम् । चक्रमिथेत्यप्युदाहरणम् । स्नुक्रमोरिति नियमेनात्मनेपदे तासावनिट्कत्वेऽपि परस्मैपदे सेट्कत्वात् । **ऋतो भारद्वाजस्येति** ॥ तासौ नित्यमनिट इति थलीति नेति इडिति चानुवर्तते । भारद्वाजस्य मते ऋदन्ताद्धातो परस्य थलो नेडिति फलितम् । हृञ् धृञादौ अचस्तास्वदित्येव सिद्धम् । अतो नियमार्थमिदमित्याह । ऋदन्तादेव थलो नेडिति । अनृदन्तात्परस्य तु थल इट् स्यादेवेत्येवकारार्थः । तदाह । **अन्यस्य स्यादे-**

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥

न च स्तुद्रवादीनामपि थलि विकल्पः शङ्क्यः । 'अचस्तास्वत्—' (२२९४) इति 'उपदेशेऽत्वतः' (२२९५) इति च योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्तकः 'अनन्तरस्य—' इति न्यायात् । विवयिथ—विवेथ

**वेति** ॥ ऋदन्तभिन्नात्परस्य थल इट् स्यादेवेत्यर्थः । तथा च ऋदन्तभिन्नाद्धातोः परस्य थलो नेण्निवृत्तिरिति भारद्वाजमते फलतीति न वैयर्थ्यमिति भावः । तथाच अनृदन्ताद्धातोः परस्य थलो भारद्वाजमते इट् । मतान्तरे तु अचस्तास्वदिति उपदेशेऽत्वत इति च तत्र नेडिति विकल्पः फलतीति भावः । तद्यथा । पपिथ । पपाथ । पेचिथ । पपक्थ । **अयमत्रेति** ॥ कृसृभृवृस्तुद्रुस्रुश्रुवो लिटीति, अचस्तास्वत्थल्यनिटो नित्यमिति, उपदेशेऽत्वत इति, ऋतो भारद्वाजस्येति च, सूत्रचतुष्टयस्य विषयाणां सङ्ग्रहो वक्ष्यत इत्यर्थः । **अजन्त इति** ॥ यः धातुः ऋदन्तभिन्नाजन्तः ह्रस्वाकारवान् वा तासौ नित्यानिट् सोऽयं थलि विकल्पितेट्क इति पूर्वार्धस्यार्थः । अत्र ईदृगित्यस्य तासौ नित्यानिडित्यर्थः । यः ऋदन्तस्तासौ नित्यानिट् सः थलि नित्यानिडित्यर्थः । अचस्तास्वदिति पाणिनिमते ऋतो भारद्वाजस्येति भारद्वाजमतेऽपि तस्य अनिट्कत्वादिति भावः । **क्राद्यन्य इति** ॥ क्राद्यष्टभ्योऽन्यो धातुः लिटि नित्यं सेडित्यर्थः । क्राद्यष्टभ्य एव परस्य लिटि नेडिति कृसृभृवृ इति सूत्रेण नियमितत्वादिति भावः । नन्वत्र क्राद्यन्य इत्युक्त्या क्रादीनां अष्टानां लिटि नित्यानिट्कत्वमवगतम् । तदनुपपन्नम् । स्तुद्रुस्रुश्रुवां ऋदन्तभिन्नत्वेन तेभ्यस्थलि अचस्तास्वदिति निषेधस्य भारद्वाजमते अप्रवृत्त्या इड्विकल्पस्य दुर्वारत्वात् । नचैव सति कृसृभृवृ इति सूत्रे स्तुद्रुस्रुश्रुग्रहणमनर्थकमिति वाच्यम् । तुष्टुव तुष्टुमेत्यादौ वमादिषु क्रादिनियमप्राप्तस्य इटो निवृत्त्या चरितार्थत्वादित्याशङ्क्य निराकरोति । न च स्तुद्रुस्रुश्रुवामपि थलि विकल्पः शङ्क्य इति कुत इत्यत आह । अचस्तास्वदिति । ऋदन्तादेव परस्य थल इण्निषेधः । अनृदन्तात्परस्य तु थल इण्निषेधो नेति भारद्वाज मतम् । अयञ्च इण्निषेधस्य निषेधः अचस्तास्वदिति उपदेशेऽत्वत इति च सूत्रद्वयप्राप्तस्यैव इण्निषेधस्य पक्षे निवर्तकः । न तु क्रादिसूत्रप्राप्तस्य इट्प्रतिषेधस्यापीत्यर्थः । कुत इत्यत आह । **अनन्तरस्येति** ॥ अचस्तास्वदिति उपदेशेऽत्वत इति ऋतो भारद्वाजस्येति च सूत्रक्रमः । कृसृभृवृ इति सूत्रन्तु ततः प्राग्बहुव्यवहितमिति भावः । किञ्च नेड्वशिकृतीत्यादिप्रतिषेधकाण्डोत्तरं आर्धधातुकस्येड्वलादेरिति विधिकाण्डारम्भसामर्थ्यादपि स्तुद्रुस्रुश्रुवामिण्निषेधो भारद्वाजनियमम्बाधत इति नेड्वशिकृतीत्यत्र वस्वेकाजाद्धसामित्यत्र च भाष्ये स्पष्टम् । ततश्च प्रकृते अजन्तस्थलि वीभावे तस्य अजन्तत्वात्तासौ नित्यानिट्त्वाच्च इड्विकल्प इति सिद्धम् । तदाह । **विवयिथ विवेथेति** ॥ सिबादेशस्य थलः पित्वादसंयोगादिति कित्वाभावाद्गुणः । इट्पक्षे अवादेशः ।

आजिथ । विव्यथुः । विव्य । विवाय—विवय । विव्यिव । विव्यिम । वेता—अजिता । वेष्यति—अजिष्यति । अजतु । आजत् । अजेत् । वीयात् ।

## २२९७ । सिचि वृद्धिः परस्मैपदेषु । (७-२-१)

इगन्ताङ्गस्य वृद्धिः स्यात्परस्मैपदे परे सिचि । अवैषीत्—आजीत् । अवेष्यत्—आजिष्यत् । 'तेज २३१ पालने' । तेजति । 'खज २३२ मन्थे' । खजति । 'खजि २३३ गतिवैकल्ये' । खञ्जति । 'एजृ २३४ कम्पने' एजांचकार । 'टुओ स्फूर्जा २३५ वज्रनिर्घोषे' स्फूर्जति । पुस्फूर्जे । 'क्षि २३६ क्षये' । अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः । क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । चिक्षयिथ--चिक्षेथ । चिक्षियिव । चिक्षियिम । क्षेता ।

---

**आजिथेति** ॥ वलादावार्धधातुके वेष्यत इति वीभावाभावपक्षे अजधातोरनुदात्तोपदेशबहिर्भूतत्वादिट् । द्वित्वम् । हलादिशेष । अत आदेरिति सवर्णदीर्घ. । **विव्यथुरिति** ॥ अथुसि वीभावे द्वित्वे अभ्यासहृस्वे असयोगादिति कित्वात् गुणाभाव इयङपवादे एरनेकाच इति यणि रूपम् । **विव्येति** ॥ थस्य अकारे वीभावादि । **विवाय विवयेति** ॥ णलुत्तमो वेति णित्वविकल्पाद्वृद्धिविकल्प. । **विव्यिव विव्यिमेति** ॥ क्राद्यन्यो लिटि सेट्भवेदिति नित्यमिटि यण् । **वेता अजितेति** ॥ लुटि तासि वीभावविकल्पः । **वेष्यति । अजिष्यतीति** ॥ लृटि स्ये वीभावविकल्प' । **वीयादिति** ॥ आशीर्लिङादेशस्य आर्धधातुकत्वात् वीभाव. । अथ लुङि सिचि वीभावे सार्वधातुकार्धधातुकयोरिति गुणे प्राप्ते । **सिचि वृद्धिरिति** ॥ **इगन्तस्येति** ॥ वृद्धिश्रुत्या इक इत्युपस्थितमङ्गस्येत्यधिकृतस्य विशेषणम् । तदन्तविधिरिति भाव । एव च अकोषीदित्यादौ व्यञ्जनस्य न वृद्धिः । **अवैषीदिति** ॥ लुङस्तिप् इकारलोप' सिचि वीभावः एकाच इति इण्णिषेधः वृद्धि' अडागम' षत्वम् । **आजीदिति** ॥ सिज्लोपः । वदव्रजेति हलन्तलक्षणायां वृद्धौ नेटि इति निषिद्धायामडागमे आटश्चेति वृद्धिः । लृङि अवेष्यत् । आजिष्यत् । तेजपालन इत्यादि स्पष्टम् । **एजृ कम्पन इति** ॥ दीप्तौत्वात्मनेपदी गतः । **टुओ स्फूर्जेति** ॥ आदिर्ञिटुडव इति टुरित् । उपदेशेऽनुनासिकत्वादोकार आकारश्च इत् । ट्वितोऽथुच् ओदितश्चेति निष्ठानत्वम् । आदितश्चेति निष्ठायामिण्णिषेधश्च । तत्फलानि उपधायाश्चेति दीर्घस्यानित्यत्वज्ञापनार्थमिह दीर्घ ऊकारः पठितः । तेन हुर्छतीत्यादौ नदीर्घ इत्याहुः । **स्फूर्जतीति** ॥ लिटि पुस्फूर्जे अस्फूर्जीत् । **क्षि क्षय इति** ॥ क्षयो नाशः । अन्तर्भावितण्यर्थ इति नाशनार्थक इत्यर्थः । अजन्तेष्वेवास्य पाठो युक्तः । **क्षयतीति** ॥ नश्यतीत्यर्थ. । नाशयतीति वा । शपि गुणे अयादेश' । **चिक्षायेति** ॥ णलि वृद्धिः अयादेशः । **चिक्षियतुरिति** ॥ असंयोगादिति कित्वान्न गुणः । इयङ् । **चिक्षयिथ चिक्षेथेति** ॥ पित्वेन कित्वाभावात् गुण. । अजन्तत्वा तासौ नित्यानिट्त्वाच्च । भारद्वाजनियमात्थलि वेट् । इट्पक्षे अयादेशः । चिक्षियथुः । चिक्षिय । चिक्षाय । चिक्षय । वस्मसोस्तु क्रादिनियमात् नित्यमिट् । तदाह ।

### २२९८ । अकृत्सार्वधातुकयोर्दीर्घः । (७-४-२५)

अजन्तस्याङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे। नतु कृत्सार्वधातुकयोः। क्षीयात्। अक्ष्वेषीत्। ‘क्ष्विज २३७ अव्यक्ते शब्दे’। कूजिना सहायं पठितुं युक्तः। चिक्ष्वेज। ‘लज २३८ लाजि २३९ भर्त्सने’। ‘लाज २४० लाजि २४१ भर्जने च’। ‘जज २४२ जजि २४३ युद्धे’। ‘तुज २४४ हिंसायाम्’। तोजति। तुतोज। ‘तुजि २४५ पालने’। ‘गज २४६ गाजि २४७ गृज २४८ गृजि २४९ मुज २५० मुजि २५१ शब्दार्थाः’। ‘गज’ मदने च। ‘वज २५२ व्रज २५३ गतौ’। ववजतुः। ‘वदव्रज--’ (२२६७) इति वृद्धिः। अव्राजीत्।

अथ टवर्गीयान्ताः शाडन्ता अनुदात्तेतः षट्त्रिंशत्। ‘अट्ट २५४ अतिक्रमहिंसयोः’। दोपधोऽयम् ‘तोपधः’ इत्यन्ये। अट्टते। आनट्टे। ‘वेष्ट २५५

**चिक्षियिव चिक्षियिमेति** ॥ क्षेता। क्षेष्यति। क्षयतु। अक्षयत्। क्षयेत्। आशीर्लिङि विशेषमाह। **अकृत्सार्वधातुकयोरिति** ॥ अङ्गस्येत्यधिकृतम्। अयङ्यि क्ङितीत्यतः यीति सप्तम्यन्तमनुवृत्तमङ्गाक्षिप्तप्रत्ययविशेषणम्। तदादिविधिः। दीर्घश्रुत्या अच इत्युपस्थितमङ्गविशेषणम्। तदन्तविधिः। तदाह। **अजन्तस्येत्यादिना** ॥ अकृत्सार्वधातुकयोरिति किम्। प्रकृत्य। स्तुत्वा। सार्वधातुके परत्वाद्दीर्घो न। चिनुयात्। सार्वधातुकत्वान्न दीर्घः। **क्ष्विजेति** ॥ इदुपधः। **कूजिनेति** ॥ कूज अव्यक्ते शब्दे इत्यनुपदमेव पठितम्। तत्रैव कूज क्ष्विज अव्यक्ते शब्दे इति पठितुं युक्तमित्यर्थः। अर्थैक्यादिति भावः। **लजलजि भर्त्सन इति** ॥ “भर्त्सनं त्वपवादर्गाः” इत्यमरः। द्वितीय इदित्। आशीर्लिङि लज्यात्। लञ्ज्यात्। **लाजलाजि भर्जन इति** ॥ आदुपधौ। द्वितीय इदित्। जजजजीत्यादि स्पष्टम्। **वजव्रजेति** ॥ आद्यस्य असंयुक्तहल्मध्यस्थाकारवत्वेऽपि नशसददवादिगुणानामित्येत्वाभ्यासलोपौ नेत्याह। **ववजतुरिति** ॥ अवाजीत् अवजीत्। द्वितीयस्य तु संयुक्तहल्मध्यस्थाकारवत्वादेत्वाभ्यासलोपयोर्न प्रसक्तिः। अव्राजीदित्यत्र अतो हलादेरिति वृद्धिविकल्पमाशङ्क्याह। **वदव्रजेति वृद्धिरिति** ॥ हलन्तत्वादेव सिद्धे व्रजग्रहणस्य अतो हलादेरिति विकल्पनिरासार्थत्वादिति भावः। शुचादयोऽद्गिरसमानिवृत्ताः। **शाडन्ता इति** ॥ शाडृश्लाघायामित्यन्ता इत्यर्थः। शाड्यन्ता इति क्वचित्पाठः। **अट्टेति** ॥ तवर्गतृतीयोपधोऽयम्। चर्त्वष्टुत्वाभ्यां टोपधनिर्देशः। तदाह। **दोपधोऽयमिति** ॥ तथा च अद्दधातोः सनि इटि अद्दि स इति स्थिते। ष्टुत्वचर्त्वयोरसिद्धत्वादजादेर्द्वितीयस्येति प्रवर्तमानं द्वित्वम् नन्द्राःसंयोगादय इति दकारं विहाय टिस् इत्यस्य भवति। ततो हलादिशेषे दकारस्य ष्टुत्वचर्त्वयोः अट्टिटिषत इतीष्टं सिध्यति। स्वाभाविकमूर्धन्योपधत्वे नन्द्रा इति निषेधाभावात् टकारद्वयसहितस्यैव द्वित्वे हलादिशेषेण द्वितीयटकारस्य निवृत्तौ अटिट्टिषत इत्यनिष्टं प्रसज्येतेति भावः। **तोपध इति**। **अन्य इति** ॥ ष्टुत्वेन तोपधनिर्देश

वेष्टने'। विवेष्टे। 'चेष्ट २५६ चेष्टायाम्'। अचेष्टिष्ट। 'गोष्ट २५७ लोष्ट २५८ संघाते'। जुगोष्टे। लुलोष्टे। 'घट्ट २५९ चलने'। जघट्टे। 'स्फुट २६० विकसने'। स्फोटते। पुस्फुटे। 'अठि २६१ गतौ'। अण्ठते। आनण्ठे। 'वठि २६२ एकचर्यायाम्'। ववण्ठे। 'मठि २६३ कठि २६४ शोके'। शोक इह आध्यानम्। मण्ठते। कण्ठते। 'मुठि २६५ पालने'। मुण्ठते 'हेठ २६६ विबाधायाम्'। विबाधा शाठ्यम्। जिहेठे। 'एठ २६७ च'। एठांचक्रे। 'हिडि २६८ गत्यनादरयोः। हिण्डते। जिहिण्डे।' हुडि २६९ संघाते'। जुहुण्डे। 'कुडि २७० दाहे'। चुकुण्डे। 'वडि २७१ विभाजने'। 'मडि २७२ च'। ववण्डे। 'भडि २७३ परिभाषणे'। परिहासः सनिन्दोपालम्भश्च परिभाषणम्। बभण्डे। 'पिडि २७४ संघाते'। पिपिण्डे। 'मुडि २७५ मार्जने'। मार्जनं शुद्धिर्न्यग्भावश्च। मुण्डते। 'तुडि २७६ तोडने'। तोडनं दारणं हिंसनं च। तुण्डते। 'हुडि २७७ वरणे'। वरणं स्वीकारः। 'हरणे इत्येके। हुण्डते। 'चडि २७८ कोपे'। चण्डते। 'शडि २७९ रुजायां संघाते च'। शण्डते। 'तडि २८० ताडने। तण्डते। 'पडि २८१ गतौ'। पण्डते। 'कडि २८२ मदे'। कण्डते। 'खडि २८३ मन्थे'। 'हेडृ २८४ होडृ २८५ अनादरे'। जिहेडे। जुहोडे' 'बाडृ २८६ आप्लाव्ये'। बशादिः। आप्लाव्यमाप्लवः। बाडते। 'द्राडृ २८७ ध्राडृ २८८ विशरणे'। द्राडते। ध्राडते। 'शाडृ २८९ श्लाघायाम्। शाडते।

अथ गड्यन्ताः परस्मैपदिनः। 'शौटृ २९० गर्वे'। शौटति। शुशौट। 'यौटृ २९१ बन्धे'। यौटति। 'म्लेटृ २९२ म्रेडृ २९३ उन्मादे'। द्वितीयो डान्तः।

इति भावः। अस्मिन्पक्षे सनि द्वित्वे कर्तव्ये ष्टुत्वस्य सिद्धत्वेऽपि नन्द्रा इति निषेधाभावात्तकारविशिष्टस्याट्टि स इत्यस्य द्वित्वे हलादिशेषेण टकारस्य निवृत्त्या अतिट्टिषत इति रूपमिति भावः। **आनट्ट इति**॥ इह नन्द्रा इति निषेधो न। तत्र द्वितीयस्यैकाच इत्यनुवृत्तेः। **घट्ट चलन इति**॥ अयञ्चुरादावपि। **स्फुट विकसन इति**॥ अयङ्कुटादावपि। **अठि गताविति**॥ लिटि नुमि द्वित्वे हलादिशेषे अत आदेरिति दीर्घे तस्मान्नुड्द्विहल इति नुडिति मत्वाऽऽह। **आनण्ठ इति। वठि एकचर्यायामिति**॥ असहायचर्यायामित्यर्थः। **मडिचेति**॥ विभाजन इत्यनुषज्यते। मडि भूषायामिति परस्मैपदिषु वक्ष्यते। **शाडृश्लाघायामिति**॥ डलयोरैक्यात्। शालत इति काश्यपः। इत्यष्टादयः षट्त्रिंशद्गताः। **अथ गड्यन्ता इति**॥ गडि वदनैकदेश इत्यन्ता इत्यर्थः। **म्लेटृम्रेडृ इति**॥ एदुपधौ। **द्वितीयोडान्त इति**॥

टान्तमध्ये पाठस्त्वर्थसाम्यान्नाथतिवत् । म्लेटति । म्रेडति । 'कटे २९४ वर्षावरणयोः' । 'चटे' इत्येके । चकाट । सिचि 'अतो हलादेर्लघोः' (२२८४) इति वृद्धौ प्राप्तायाम् ।

## २२९९ । ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् । (७-२-५)

ह्मयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नस्यादिडादौ सिचि । अकटीत् । 'अट २९५ पट २९६ गतौ' । आट । आटतुः । आटुः । पपाट । पेटतुः । पेटुः । 'रट परिभाषणे' । रराट । 'लट २९८ बाल्ये' । ललाट । 'शट २९९ रुजाविशरणगत्यवसादनेषु' । शशाट । 'वट ३०० वेष्टने' । ववाट । ववटतुः । ववटुः । ववटिथ । 'किट ३०१ खिट ३०२ त्रासे' । केटति । खेटति । 'शिट ३०३ षिट ३०४ अनादरे' । शेटति । शिशेट । सेटति । सिषेट । 'जट ३०५ झट ३०६ संघाते' । 'भट ३०७ भृतौ' । 'तट ३०८ उच्छ्राये' । 'खट ३०९

टवर्गतृतीयान्त इत्यर्थः । ननु टान्तेष्वस्य कथम्पाठ । चुड्भावकरण इत्यारभ्यानुक्रम्यमाणेष्वेवास्य पठितु युक्तत्वादित्यत आह । **टान्त मध्येति** । **नाथतिवदिति** ॥ एधवृद्धावित्यारभ्यानुक्रान्तेषु तवर्गचतुर्थान्तेषु यथा नाथृनाधृयाच्ञेति तवर्गद्वितीयान्तस्यापि अर्थसाम्यात्पाठस्तद्वदित्यर्थः । **कटे इति** ॥ कण्ठ्यादिः । **चटे इति** ॥ तालव्यादि. आद्यस्य लिटि अभ्यासस्य चुत्वमित्याह । **चकाटेति** ॥ चकटतुः । द्वितीयस्य चेटतुः वैरूप्यापादकादेशादित्वाभावादेत्वाभ्यासलोपौ । **प्राप्तायामिति** ॥ हलन्तलक्षणाया नित्यवृद्धेर्नेटीति निषेधम्बाधित्वा अतोहलादेरिति वैकल्पिकवृद्धौ प्राप्तायामित्यर्थ । **ह्म्यन्तेति** ॥ ह्मयन्त क्षण श्वस जागृ णि श्वि एदित् एषान्द्वन्द्वात्षष्ठी । ह् म् य् इत्येते वर्णा येषामन्ते ते ह्मयन्ताः । तदाह । **ह्मयान्तस्येति** । **क्षणादेरिति** ॥ आदिना श्वसजागृ इत्यनयोर्ग्रहणं । **ण्यन्तस्येति** ॥ प्रत्ययग्रहणपरिभाषया णिग्रहणेन तदन्तग्रहणमिति भावः । **श्वयतेरिति** ॥ श्विधातोरित्यर्थः । **एदित इति** ॥ एत् इत् यस्येति विग्रहः । **वृद्धिर्न स्यादिति** ॥ सिचि वृद्धिरित्यतो नेटीत्यतश्च तदनुवृत्तेरिति भावः । **इडादौ सिचीति** ॥ सिचि वृद्धिरित्यत. सिचीति नेटीत्यत इटीति चानुवर्तत इति भावः । **अकटीदिति** ॥ एदित्वान्न वृद्धिः । **अटपटेति** ॥ अत आदेरिति दीर्घं मत्वा आह । **आटेति** । **पेटतुरिति** ॥ एत्वाभ्यासलोपौ । वट वेष्टने । **ववटतुरिति** ॥ नशसददवादिगुणानामिति निषेधः । **ववटिथेति** ॥ अत्र थलि च सेटीति प्राप्तस्य नशसददेति निषेधः । **किटखिट त्रास इति** ॥ यद्यपि इट्किटकटीगतावित्ति अग्रे किटधातुः पठ्यते । तथाप्यर्थभेदात् पुनरिह पाठः । खिटत्रासे किट गतौ चेति पठितुं युक्तम् । **शिटषिटेति** ॥ आद्यस्तालव्यादिः । द्वितीयस्तु षोपदेशः । **जट झटेति** ॥ आद्यस्य अवे-

काङ्क्षायाम्'। 'णट ३१० नृत्तौ'। 'पिट ३११ शब्दसंघातयोः'। 'हट दीप्तौ'। 'षट ३१३ अवयवे'। 'लुट ३१४ विलोडने'। 'डान्तोयम्' इत्येके 'चिट ३१५ परप्रेष्ये'। विट ३१६ शब्दे'। 'बिट ३१७ आक्रोशे'। बशादिः। 'हिट' इत्येके। 'इट ३१८ किट ३१९ कटी ३२० गतौ'। एटति। केटति। कटति। ईकारः 'श्वीदितो निष्ठायाम्' (३०३९) इतीण्णिषेधार्थः। केचित्तु इदितं मत्वा नुमि कृते कण्टतीत्यादि वदन्ति। अन्येतु 'इ' 'ई' इति प्रश्लिष्य, अयति। इयाय। इयतुः। इयुः। इययिथ—इयेथ। ईय--इयाय—इयय। दीर्घस्य तु 'इजादेश्च—' (२२३७) इत्यामि अयांचकारेत्यादि उदाहरन्ति। 'मडि ३२१ भूषायाम्'। 'कुडि ३२२ वै-

रूप्यापादकादेशादित्वादेत्वाभ्यासलोपौ। द्वितीयस्य तु न। जेटतु। जझटतु। **नट नृत्ताविति**॥ णोपदेश। चुरादेरेव नाटेः पर्युदासादय णोपदेश एव। प्रणटति। **इटकिटकटीगताविति**॥ कटे वर्षावरणयोरिति कटि. पूर्वमेदित्पठित.। इह ईदित्पठ्यते। एदित्वाभावात् ह्मयन्तेति वृद्धिनिषेधो नभवति। अकटीत्। अकाटीत्। ननु तर्हि कटेत्येव कुतो न पठ्यत इत्यत आह। **ईकार इति। केचित्त्विति**॥ कटि इति ह्रस्वान्तपाठ मत्वा इदित्वान्नुमि कृते अनुस्वारे परसवर्णे च कण्टतीति वदन्तीत्यर्थः। **अन्येत्विति**॥ उदाहरन्तीत्यन्वयः। **प्रश्लिष्येति**॥ कटि इत्यनन्तरम् इ ई इति धातुद्वय सवर्णदीर्घेण प्रश्लिष्य निर्दिष्टमिति भावः। **अयतीति**॥ इधातोर्लटि शपि गुणे अयादेशः। **इयायेति**॥ णलि द्वित्वे वृद्धौ आयादेशे अभ्यासस्याऽसवर्णे इति इयङ्। **इयतुरिति**॥ इकारोऽत्र ह्रस्वः। तथाहि इ अतुसिति स्थिते कित्वाद्गुणाभावे द्विर्वचनेऽचीति निषेधाद्यणभावे इ इत्यस्य द्वित्वे इ इ अतुसिति स्थिते सवर्णपरकत्वादभ्यासस्य इयङभावे सति वार्णादाङ्गम्बलीय इति सवर्णदीर्घम्बाधित्वा एरनेकाच इत्युत्तरखण्डस्य यणि इयतुरिति रूपम्। इधातोर्भारद्वाजनियमात्थलि वेट्। तत्र इट्पक्षे रूपमाह। **इययिथेति**॥ थलि द्वित्त्वे इटि पित्वेन कित्वाभावात् गुणे अयादेशे अभ्यासस्य इयङ्। नचाचः परस्मिन्निति गुणस्य स्थानिवत्त्वेन असवर्णपरत्वाभावात् कथमभ्यासस्य इयङिति वाच्यम्। असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्वाप्रसक्तेः। एव णलि इयायेत्यत्रापि वृद्धेर्नस्थानिवत्त्वम्। थलि इडभावपक्षे रूपमाह। **इयेथेति**॥ थलि द्वित्वे गुणे अभ्यासस्येयङ्। अथुसि इयथुः। **इयेति**॥ थस्य अकारादेशे द्वित्वे उत्तरखण्डस्य एरनेकाच इति यणि रूपम्। णलुत्तमोवेति णित्वपक्षे आह। **इयायेति**॥ द्वित्वे पित्वेन कित्वाभावात् वृद्धौ आयादेशे अभ्यासस्य इयङ्। णित्वाभावे आह। **इययेति**॥ द्वित्वे पित्वेन कित्वाभावात् गुणे अयादेशे अभ्यासस्य इयङ्। वसि मसि च क्रादिनियमान्नित्यमिटि द्वित्वे उत्तरखण्डस्य एरनेकाच इति यणि इयिव इयिमेति रूपम्। एता एष्यति अयतु ऐत् अयेत्। आशीर्लिङि तु अकृत्सार्वधातुकयोरिति दीर्घात् ईयात्। सिचि वृद्धिः। ऐषीत्। ऐष्यत्। **दीर्घस्य त्विति**॥ दीर्घस्य ईधातोरित्यर्थः। तस्य लिट वर्जयित्वा लडादिषु पूर्ववत्। लिटि विशेषमाह। **अयाञ्चकारेति**॥

कल्ये'। कुण्डति। कुण्डत इति तु दाहे गतम्। 'मुड ३२३ प्रुड ३२४ मर्दने'। 'चुडि ३२५ अल्पीभावे'। 'मुडि ३२६ खण्डने'। मुण्डति। 'पुडि च' इत्येके। पुण्डति। 'रुटि ३२७ लुटि ३२८ स्तेये'। रुण्टति। लुण्टति। 'रुठि लुठि' इत्येके। 'रुडि लुडि' इत्यपरे। 'स्फुटिर् ३२९ विशरणे। इरित्त्वादङ्वा। अस्फुटत्--अस्फोटीत्। 'स्फुटि' इत्यपि केचित्। इदित्त्वान्नुम्। स्फुण्टति। 'पठ ३३० व्यक्तायां वाचि'। पेठतुः। पेठिथ। अपठीत्--अपाठीत्। 'वठ ३३१ स्थौल्ये'। ववठतुः। ववठिथ। 'मठ ३३२ मदनिवासयोः'। 'कठ ३३३ कृच्छ्रजीवने'। 'रट ३३४ परिभाषणे'। 'रठ' इत्येके। 'हठ ३३५ प्लुतिशठत्वयोः'। 'बलात्कारे' इत्येके। हठति। जहाठ। 'रुठ ३३६ लुठ ३३७ उठ ३३८ उपघाते'। ओठति। 'ऊठ' इत्येके। ऊठति। ऊठांचकार। 'पिठ ३३९ हिंसासंक्लेशनयोः'। 'शठ ३४० कैतवे च'। 'शुठ ३४१ प्रतिघाते'। शोठति। 'शुठि' इति स्वामी। शुण्ठति। 'कुठि ३४२ च'। कुण्ठति। 'लुठि ३४३ आलस्ये प्रतिघाते च'। 'शुठि ३४४ शोषणे'। रुठि ३४५ लुठि ३४६ गतौ'। 'चुड्ड ३४७ भावकरणे'। भावकरणमभिप्रायसूचनम्। चुड्डति। चुचुड्ड। 'अड्ड ३४८ अभियोगे'। अड्डति। आनड्ड। 'कड्ड ३४९ कार्कश्ये'। कड्डति। चुड्डादयस्त्रयो दोपधाः। तेन क्विपि। चुत्। अत्। कत्। इत्यादि। 'क्रीडृ ३५० विहारे'। चिक्रीड। 'तुडृ ३५१ तोडने'। तोडति। तुतोड। 'तूडृ' इत्येके। 'हुडृ ३५२ हूडृ ३५३ होडृ ३५४ गतौ'। हुड्यात्—हूड्यात्—होड्यात्। 'रौडृ ३५५ अनादरे'। 'रोडृ ३५६ लोडृ ३५७ उन्मादे'। 'अड ३५८ उद्यमे'। अडति। आड। आडतुः। आडुः।

ईधातोरामि गुणे अयादेशः अनुप्रयोगश्च। **कुडि वैकल्य इति** ॥ वैकल्यम् अविवेक इत्याहुः। अपूर्णभावो वा। **मुडप्रुड मर्दन इत्यादि** ॥ स्पष्टम्। पठधातोर्लिटि अतुसादौ किति एत्वाभ्यासलोपौ। तदाह। **पेठतुरिति**। **पेठिथेति** ॥ पित्वे अकित्वेऽपि थलि चसेटीत्येत्वाभ्यासलोपौ। **अपठीत्। अपाठीदिति** ॥ अतो हलादेर्लघोरिति वृद्धिविकल्पः। **वठ स्थौल्य इति** ॥ स्थौल्य स्थूलीभवनम्। नशसददवादिगुणानामित्येत्वाभ्यासलोपनिषेध इति मत्वा आह। **ववठतुः। ववठिथेति। दोपधा इति** ॥ शृत्वेन दोपधानिर्देश इति भावः। **चुदिति** ॥ चुड्डधातोः क्विपि हल्ङ्यादिना सुलोपे द्वितीयस्य डस्य संयोगान्तलोपे ष्टुत्वनिवृत्तौ वावसान इति चर्त्वे चुत् इति रूपम्। **अदिति** ॥ अड्डधातोः क्विपि पूर्ववत् रूपम्। **कदिति** ॥ कड्डधातोः क्विपि रूपम्। **इत्यादीति** ॥ आदिना जश्त्वेन चुदित्यादिसङ्ग्रहः।

'लड ३५९ विलासे'। लडति। डलयोर्लरयोश्चैकत्वस्मरणाल्ललतीति स्वाम्यादयः। 'कड ३६० मदे'। कडति। 'कडि' इत्येके। कण्डति। 'गडि ३६१ वदनैकदेशे'। गण्डति। इति टवर्गीयान्ताः।

अथ पवर्गीयान्ताः। तत्रानुदात्तेतः स्तोभत्यन्ताश्चतुस्त्रिंशत्। 'तिपृ ३६२ तेपृ ३६३ ष्टिपृ ३६४ ष्टेपृ ३६५ क्षरणार्थाः'। आद्योऽनुदात्तः। क्षीरस्वामी त्वयं सेडिति बभ्राम। तेपते। तितिपे। क्रादिनियमादिट्। तितिपिषे। तेप्ता। तेप्स्यते।

## २३००। लिङ्सिचावात्मनेपदेषु। (१-२-११)

इक्समीपाद्धलः परौ झलादी लिङात्मनेपदपरः सिच्चेत्येतौ कितौ स्तः। कित्त्वान्न गुणः। तिप्सीष्ट। तिप्सीयास्ताम्। तिप्सीरन्। लुङि 'झलो झलि' (२२८१) इति सलोपः। अतिप्त। अतिप्साताम्। अतिप्सत। तेपते। तितेपे। तेपिता। तिष्टिपे। तिष्टिपाते। तिष्टिपिरे। तिष्टेपे। तिष्टेपाते। तिष्टेपिरे।

---

**एकत्वस्मरणादिति**॥ शीक्षादाविति शेषः। **गडि वदनेति**॥ तवर्गान्तेषु गदीति गतम्। परस्मैपदिनः शौटृ गर्वे इत्यादयो गता। **तिपृ इति**॥ प्रथमत्रयाविदुपधौ। द्वितीयचतुर्थौ एदुपधौ। तृतीयचतुर्थौ षोपदेशौ च। तकारस्य ष्टुत्वेन दकारस्य निर्दिष्टतया दन्त्यपरकसादित्वात्। **आद्य इति**॥ तिपृ धातुरित्यर्थ। भाष्यादौ अनुदात्तोपदेशेष्वस्य पाठादिति भावः। **बभ्रामेति**॥ भाष्यविरुद्धत्वादिति भावः। आद्यस्योदाहरति। **तेपत इति**॥ शपि लघूपधगुण। **तितिप इति**॥ असयोगादिति कित्त्वान्न गुणः। अथ तितिपिष इत्यत्र एकाच उपदेश इति निषेधमाशङ्क्याह। **क्रादिनियमादिति**। **तेप्स्यत इति**॥ लोडादौ तु, तेपताम्। अतेपत। तेपेत। अथाशीर्लिङि सीयुटि सुटि तिप्सीष्टेति रूप वक्ष्यति। तत्र लघूपधगुणे प्राप्ते। **लिङिति**॥ इको झलिति हलन्ताच्चेति च, सूत्रमनुवर्त्तते। असयोगादित्यतः किदिति। इक इति सामीप्ये षष्ठी। हलि अन्वेति। तदाह। **इक्समीपादित्यादिना**॥ आत्मनेपदपरकत्व सिच एव विशेषणम्। नतु लिङः। लिङादेशस्यात्मनेपदस्य लिङः परत्वाभावात्। इकः कि। वह् वक्षीष्ट। सति तु कित्त्वे वचिस्वपीति सम्प्रसारणं स्यात्। आत्मनेपदेषु किम्। अद्राक्षीत्। इह कित्त्वे सति सृजिदृशोर्झल्यमकितीत्यम्न स्यात्। **अतिप्तेति**॥ लुङस्तादेशे, च्लि., सिच्। झलोझलीति लोप। आत्मनेपदपरकत्वेन सिच कित्वात् न लघूपधगुणः। अथ तेपृधातोरेदुपधत्वस्य प्रयोजनमाह। **तितेपे इति**॥ इदुदुपधत्वेतु कित्त्वाद्गुणो न स्यादिति भावः। सेट्कोऽयमिति सूचयति। **तेपितेति**॥ तेपिषीष्ट। अतेपिष्ट। ष्टिपृ धातोस्तु धात्वादेः षस्सः इति सत्वे ष्टुत्वनिवृत्त्या लटि स्तेपत इति रूप सिद्धवत्कृत्य लिटि रूपमाह। **तिष्टिप इति**॥ शर्पूर्वाः खय इति तकार शिष्यते। षकारस्य निवृत्तौ ष्टुत्वनिवृत्ते कित्वान्न गुण.। **तिष्टेप इति**॥

'तेपृ' कम्पने च । 'ग्लेपृ ३६६ दैन्ये' ग्लेपते। 'टु वेपृ ३६७ कम्पने' । वेपते। 'केपृ ३६८ गेपृ ३६९ ग्लेपृ ३७० च' । चात्कम्पने गतौ च । सूत्रविभागादिति स्वामी । मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पन इत्यपेक्षत इत्याह । ग्लेपेरर्थ-भेदात्पुनः पाठः । 'मेपृ ३७१ रेपृ ३७२ लेपृ ३७३ गतौ' । 'त्रपूष् ३७४ ल-ज्जायाम्' । त्रपते ।

## २३०१ । तॄफलभजत्रपश्च । (६-४-१२२)

एषामत एकारोऽभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च । त्रेपे । त्रेपाते । त्रेपिरे । ऊदित्त्वादिड्वा । त्रपिता—त्रप्ता । त्रपिषीष्ट—त्रप्सीष्ट । 'कपि ३७५ चलने' कम्पते । चकम्पे । 'रबि ३७६ लबि ३७७ अबि ३७८ शब्दे' । ररम्बे । लल-म्बे । आनम्बे । 'लबि ३७९ अवस्रंसने च' । 'कबृ ३८० वर्णे' । चकबे । 'क्लीबृ ३८१ अधार्ष्ट्ये' । चिक्लीबे । 'क्षीबृ ३८२ मदे' । क्षीबते । 'शीभृ ३८३ कत्थने' । शीभते । 'चीभृ ३८४ च' । 'रेभृ ३८५ शब्दे' । रिरेभे । 'अभि-रभी' क्वचित्पठ्येते । अम्भते । रम्भते । 'ष्टभि ३८६ स्कभि ३८७ प्रतिबन्धे' । स्तम्भते । उत्तम्भते । नुम्यनुस्वारः । 'उदः स्थास्तम्भ्वोः—' (११८) इति पूर्वसवर्णः । विस्तम्भते । 'स्तन्भेः' (२२७२) इति षत्वं तु न भवति ।

ष्टेपृधातोः रूपम् । **तेपृ कम्पने चेति** ॥ चात्क्षरणे । वस्तुतस्तु चकारेण क्षरणार्थस्य लाभात् । पूर्वत्रास्य पाठस्त्यक्तु शक्यः । केचित्तु, देपृ इति वर्गतृतीयादिं पठन्ति । **चात्कम्पने गतौ चे-ति** ॥ अनुक्तसमुच्चयार्थं इति भावः । एतच्च टुवेपृकेपृगेपृग्लेपृकम्पन इत्येव सिद्धे पृथक्पाठाल्लभ्यते । **अर्थभेदादिति** ॥ ग्लेपृ दैन्य इति पूर्वं पठितम् । इह तु अर्थभेदात् पुनः पाठः । अन्यथा ग्ले-पृ दैन्ये कम्पने गतौचेति गौरवं स्यादिति भावः । **त्रपूषिति** ॥ ऊकारष्षकारश्च इत् । अदुपधः । असंयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपयोरप्राप्तावाह । **तॄफलेति** । अत एकहल्मध्ये इत्यतः अत इति लिटीति चानुवर्तते । घ्वसोरित्यत एदिति अभ्यासलोपश्चेतिच । गमहनेत्यस्मात् क्ङितीति । थलिच सेटीति सूत्रञ्च । तदाह । **एषामिति** ॥ गुणशब्देन भाविताकारवत्त्वाद्विरूपादेशाद्द्वित्वा-देकहल्मध्यस्थत्वाभावाच्च प्राप्ते विधिरयम् । **आनम्ब इति** ॥ द्विहल्त्वान्नुट् । **ष्टभिस्कभीति** ॥ आद्यः षोपदेशः । ष्टुत्वेन तकारस्य टकारनिर्देशेन दन्त्यपरकसादित्वात् नतः षस्य सत्वे ष्टुत्वस्य निवृत्तिः । तदाह । **उत्तम्भत इति** । **नुम्यनुस्वार इति** ॥ इदित्वान्नुमि नश्चापदान्त-स्येति तस्यानुस्वारः । अनुस्वारस्य ययीति तस्य परसवर्णः मकारः । ष्टम्भ इत्येव पाठे तु आशी-र्लिङि अनिदितामिति नलोपः स्यादिति भावः । **पूर्वसवर्ण इति** ॥ सकारस्य थकारः । तस्य खरिचेति चर्त्वे तकार इत्यर्थः । अत्र यद्वक्तव्यं तत् उदस्थास्तम्भ्वोरित्यत्र हल्सन्धौ प्रपञ्चितम् ।

अनयोरमागमः स्याज्झलादावकिति। दद्रष्ठ—ददर्शिथ। द्रष्टा। द्रक्ष्यति। दृश्यात्। इरित्त्वादङ् वा।

२४०६। ऋदृशोऽङि गुणः। (७-४-१६)

ऋवर्णान्तानां दृशेश्च गुणः स्यादङि। अदर्शत। अङभावे।

२४०७। न दृशः। (३-१-४७)

**दृशश्च्लेः क्सो न। अद्राक्षीत्। दंश ९८९ दशने। दशनं दंष्ट्राव्यापारः। पृषोदरादित्वादनुनासिकलोपः। अत एव निपातनादित्येके। तेषामप्यत्रैव तात्पर्यम्। अर्थनिर्देशस्याधुनिकत्वात्। 'दंशसञ्ज—' (सू २३९६) इति**

**दद्रष्ठेति॥** दृदृश थ इति स्थिते इडभावपक्षे अमागमे ऋकारस्य यणि व्रश्चादिना शस्य षत्वे थस्य ष्टुत्वेन ठ इति भावः। इट्पक्षे त्वाह। **ददर्शिथेति॥** अझलादित्वादम् नेति भावः। **द्रष्टेति॥** तासि अमागमे शस्य षत्वे तकारस्य ष्टुत्वेन टकार इति भावः। **द्रक्ष्यतीति॥** अमागमे शस्य षत्वे षढोरिति कत्वे सस्य ष इति भावः। पश्यतु। अपश्यत्। पश्येत्। आशीर्लिङि आह। **दृश्यादिति॥** अझलादित्वादम् नेति भावः। लुङि विशेषमाह। **इरित्त्वादङ् वेति॥** अत्र अङपक्षे गुणनिषेधे प्राप्ते। **ऋदृशोऽङि॥** ऋ इत्यङ्गविशेषणत्वात् तदन्तविधिः। तदाह। **ऋवर्णान्तानामिति। अङभावे इति॥** अङभावपक्षे 'शल इगुपधात्' इति क्सादेशे प्राप्ते सतीत्यर्थः। **न दृशः॥** 'च्लेः सिच्' इत्यतश्च्लेरिति 'शल इगुपधात्' इत्यतः क्स इति चानुवर्तते। तदाह। **दृशश्च्लेः क्सो नेति॥** क्सादेशे तु अदृक्षदिति स्यादिति भावः। **अद्राक्षीदिति॥** सिचि अमागमे ऋकारस्य यणि अकारस्य हलन्तलक्षणवृद्धौ शस्य षत्वे तस्य कत्वे सस्य षत्वमिति भावः। अद्रक्ष्यत्। **दंश दशने इति॥** अयमनिट् नोपधश्च कृतानुस्वारनिर्देशः। **दंष्ट्राव्यापारः इति॥** हनुमूलगताः स्थूलदन्ताः दंष्ट्रा तद्व्यापारः क्षतक्रियादिरूप इत्यर्थः। ननु दशधातोर्ल्युटि दशनशब्दः तत्र 'अनिदिताम्' इति नकारस्य लोपो न सम्भवति ल्युटः क्ङित्त्वाभावात्। दशसञ्जेत्यपि नस्य लोपो न सम्भवति। तस्य शप्येव प्रवृत्तेः। तथाच दशन इत्यर्थनिर्देशः कथमित्यत आह। **पृषोदरादित्वादिति। अत एवेति॥** दशनशब्दनिर्देशादेव नकारस्य लोप इत्यन्ये मन्यन्त इत्यर्थः। **तेषामपीति॥** निपातनान्नकारलोप इति वदतामपि पृषोदरादिषु निपातनादित्यर्थ एव तात्पर्यं न तु धातुपाठे दश दशने इत्यर्थनिर्देशे। विनिगमनाविरहमाशङ्क्याह। **अर्थनिर्देशस्याधुनिकत्वादिति॥** सर्वधातुष्वर्थनिर्देशस्य अपाणिनीयत्वादित्यर्थः। क्वचिदेव धातुष्वर्थनिर्देशः पाणिनीय इति भूष्याणां निरूपितम्। अथ दशतीत्यादौ शपः पित्त्वेन अकित्त्वात् 'अनिदिताम्' इति नलोपाप्रवृत्तेराह। **दंशसञ्जेति। नलोपः**

नलोपः। दशति। ददंशिथ–ददंष्ठ। दंष्टा। दङ्क्ष्यति। दश्यात्। अदाङ्क्षीत। कृष ९९० विलेखने। विलेखनमाकर्षणम्। क्रष्टा–कर्ष्टा। क्रक्ष्यति–कर्क्ष्यति। 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' (वा १८२६)। अक्राक्षीत्। अक्राष्टाम्। अकार्क्षीत्। अकार्ष्टाम्। अकार्क्षुः। पक्षे क्सः। अकृक्षत्। अकृक्षताम्। अकृक्षन्। दह ९९१ भस्मीकरणे। देहिथ–ददग्ध। दग्धा। धक्ष्यति। अधाक्षीत्। अदाग्धाम्। अधाक्षुः। मिह ९९२ सेचने। मिमेह। मिमे-

---

**इति। दशतीति**॥ अनुस्वारस्यासिद्धत्वादिति भाव। दशसञ्जेत्यत्र शपीत्युक्तेरार्धधातुके नलोपो न। सयोगात्परत्वेन लिट. कित्त्वाभावादनिदितामित्यपि न। ददश। ददशतु.। ददशुः। भारद्वाजनियमात्थलि वेट्। तदाह। **ददंशिथ–ददंष्ठेति**॥ अनिट्पक्षे व्रश्चादिना शस्य षः थस्य ष्टुत्वेन ठ इति भाव। तासि व्रश्चादिना शस्य षत्वे तकारस्य ष्टुत्वमिति भावः। **दङ्क्ष्यतीति**॥ व्रश्चादिना शस्य षत्वे तस्य कत्वे अनुस्वारस्य परसवर्णे ङकारे सस्य षत्वमिति भाव। दशतु। अदशत्। दशेत्। **दश्यादिति**॥ आशीर्लिङि 'अनिदिताम्' इति नलोप इति भाव। **अदाङ्क्षीदिति**॥ सिचि शस्य ष. तस्य कः अनुस्वारस्य परसवर्णेन ङः सस्य षत्वमिति भाव। अदङ्क्ष्यत्। **कृष विलेखने इति**। अनिडयम्। कर्षति। चकर्ष। चकृषतुः। चकृषु। थलि अजन्ताकारवत्त्वाभावात् क्रादिनियमान्नित्यमिट्। चकर्षिथ। चकृषथु। चकृष। चकर्ष। चकृषिव। चकृषिम। इति सिद्धवत्कृत्याह। **क्रष्टा–कर्ष्टेति**॥ 'अनुदात्तस्य च' इत्येव विकल्प। तकारस्य ष्टुत्वम्। **क्रक्ष्यति–कर्क्ष्यतीति**॥ षस्य कत्वे सस्य ष.। कर्षतु। अकर्षत्। कर्षेत्। कृष्यात्। 'शल इगुपधात्' इति च्लेः क्सादेशे प्राप्ते आह। **स्पृशमृशेति**॥ **अक्राक्षीदिति**॥ च्लेः क्सादेशाभावे सिचि 'अनुदात्तस्य चर्दुपधस्य' इत्यमि ऋकारस्य यणि हलन्तलक्षणवृद्धौ 'षढोः कस्सि' इत्यनेन षस्य कत्वे सस्य षत्वमिति भावः। **अकार्क्षीदिति**॥ अमभावे सिचि वृद्धौ रूपम्। **पक्षे क्सः इति**॥ च्ले सिजभावपक्षे 'शल इगुपधात्' इति क्स इत्यर्थ। **अकृक्षदिति**॥ क्से सति कित्त्वाद्गुणाभावे षस्य कः सस्य ष इति भाव.। अकक्ष्यत्–अकर्क्ष्यत्। **दह भस्मीकरणे इति**॥ अनिट्। दहति। ददाह। देहतुः। देहु। थलि तु भारद्वाजनियमाद्वेडित्याह। **देहिथ–ददग्ध इति**॥ इट्पक्षे 'थलि च सेटि' इत्येत्त्वाभ्यासलोपौ। अनिट्पक्षे तु 'दादेः' इति हस्य घः 'झषस्तथोः' इति थस्य धः घस्य जश्त्वेन ग इति भावः। देहथुः देह। ददाह–ददह। देहिव। देहिम। **दग्धेति**॥ तासि हस्य घ. तकारस्य धः घस्य गः इति भावः। **धक्ष्यतीति**॥ हस्य घः दस्य भष् घस्य ग. तस्य चर्त्वेन कः सस्य ष इति भावः। दहतु। अदहत्। दहेत्। दह्यात्। **अधाक्षीदिति**॥ सिचि हलन्तलक्षणा वृद्धिः। हस्य घ. दस्य भष् घस्य गः तस्य कः सस्य षः इति भाव.। **अदाग्धामिति**॥ सिचि वृद्धिः। हस्य घः 'झलो झलि' इति सलोपः। 'झषस्तथो' इति तकारस्य धः। घस्य गः इति भावः। **अधाक्षुरिति**॥ सिचि वृद्धिः हस्य घः दस्य भष् घस्य गः तस्य कः

हिथ । मेढा । मेक्ष्यति । अमिक्षन् । कित ९९३ निवासे रोगापनयने च । चिकित्सति । संशये प्रायेण विपूर्वः । 'विचिकित्सा तु संशयः' इत्यमरः । अस्यानुदात्तेत्त्वमाश्रित्य 'चिकित्सते' इत्यादि कश्चिदुदाजहार । निवासे तु केतयति ।

दान ९९४ खण्डने । शान ९९५ तेजने । इतो वहत्यन्ताः स्वरितेतः । दीदांसति–दीदांसते । शीशांसति–शीशांसते । अर्थविशेषे सन् । अन्यत्र दानयति । शानयति । डु पचष् ९९६ पाके । पचति–पचते । पेचिथ–पपक्थ ।

सस्य षः इति भावः । अधाक्षीः । अदाग्धम् । अदाग्ध । अधाक्षम । अधाक्ष्व । अधाक्ष्म । अधक्ष्यत् । **मिह सेचने इति** ॥ अनिट् । मेहति । मिमेह । मिमिहतुः । मिमिहुः । अजन्ताकारवत्त्वाभावात् क्रादिनियमान्नित्यमिट् । तदाह । **मिमेहिथेति** ॥ मिमिहथुः । मिमिह । मिमेह । मिमिहिव । मिमिहिम । **मेढेति** ॥ तासि ढत्वधत्वष्टुत्वढलोपाः । **मेक्ष्यतीति** ॥ हस्य ढः तस्य कः सस्य षः । मेहतु । अमेहत् । मेहेत् । मिह्यात् । लुङि 'शल इगुपधात्' इति क्सः । कित्त्वान्न गुणः । हस्य ढः तस्य कः सस्य षः । तदाह । **अमिक्षदिति** ॥ अमेक्ष्यत् । **कित निवासे रोगापनयने चेति** ॥ परस्मैपदिषु पाठात् अयं परस्मैपदी । अर्थद्वयमात्रमत्र निर्दिष्टम् । अर्थनिर्देशस्य उपलक्षणत्वात् अर्थान्तरेषु वृत्तिः । तत्र 'कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च' इति निबद्धेष्वर्थेषु 'गुप्तिज्किद्भ्यः सन्' इति सन्विहितः । तदाह । **चिकित्सति इति** ॥ 'सन्यतः' इति इत्त्वे हलादिशेषे अभ्यासचुत्वे चिकित्सेति सन्नन्तं तस्माल्लटि शपि चिकित्सतीति रूपम् । अत्र सनः 'धातोः' इति विहितत्वाभावादनार्धधातुकत्वान्न लघूपधगुणः नापि इडागम इति प्रागुक्तम् । 'चिकित्साञ्चकार' इत्यादि सुगमं जुगुप्सतिवत् । संशये इत्यादि व्यक्तम् । **निवासे त्विति** ॥ व्याधिप्रतीकाराद्यर्थपञ्चकादर्थान्तरे चुरादित्वस्योक्तत्वादिति भावः । **दान खण्डने । शान तेजने इति** ॥ तेजनम् तीक्ष्णीकरणम् । **इतः इति** ॥ 'दान खण्डने' इत्यारभ्य 'वह प्रापणे' इत्येतत्पर्यन्ताः स्वरितेत इत्यर्थः । तत्र धातुपाठे अर्थनिर्देशस्य उपलक्षणत्वाद्यदा दानधातुरार्जवे शानधातुस्तु निशाने वर्तते तदा 'मान् बध दान् शान्' इति सनि 'सन्यङोः' इति द्वित्वे अभ्यासह्रस्वे तस्य 'सन्यतः' इति इत्त्वे तस्य 'मान् बध' इति दीर्घे सति नकारस्यानुस्वारे दीदांसशीशांसाभ्यां लटि स्वरितानुबन्धस्य केवलयोरचरितार्थत्वात् कर्तृगे फले तङि शपि दीदांसते शीशांसते इति रूपम् । परगामिनि तु फले परस्मैपदे तिपि शपि दीदांसति इति रूपम् । एवं शीशांसतीति । तीक्ष्णीकरोतीत्यर्थः । तदाह । **दीदांसते इत्यादि** ॥ **अर्थविशेषे इति** ॥ आर्जवे निशाने चार्थे सनित्यर्थः । **अन्यत्रेति** ॥ आर्जवनिशानाभ्यामन्यत्र णिजन्तात्परस्मैपदमेवेत्यर्थः । अर्थान्तरे अननुबन्धकाश्चुरादयः इत्युक्तेरिति भावः । **डु पचष् पाके इति** ॥ डुः षकारः चकारादकारश्च इतः । स्वरितेत्त्वादुभयपदी । तदाह । **पचति–पचते इति** ॥ पपाच । पेचतुः । पेचुः । भारद्वाजनियमात्थलि वेट् । तदाह । **पेचिथ–पपक्थेति** ॥ इट्पक्षे 'थलि च सेटि' इत्येत्वाभ्यास-

**पेचे । पक्ता । पक्षीष्ट । षच ९९७ समवाये । सचति । सचते । भज ९९८ सेवायाम् । बभाज । भेजतुः । भेजुः । भेजिथ–बभक्थ । भक्ता । भक्ष्यति–भक्ष्यते । अभाक्षीत् । अभक्त । रञ्ज ९९९ रागे । नलोपः । रजति–रजते । रज्यात् । रङ्क्षीष्ट । अराङ्क्षीत् । अराङ्क्ताम् । अरङ्क्त । शप १००० आक्रोशे । आक्रोशो विरुद्धानुद्ध्यानम् । शशाप–शेपे । अशाप्सीत्–अशप्त । त्विष १००१ दीप्तौ । त्वेषति–त्वेषते । तित्विषे । त्वेष्टा । त्वेक्ष्यति–त्वेक्ष्यते ।**

---

लोपौ । अनिट्पक्षे तु 'चो. कुः' इति भाव । पेचथुः । पेच । पपाच–पपच । पेचिव । पेचिम । क्रादिनियमादिट् । **पेचे इति** ॥ पेचाते । पेचिरे । पेचिषे । पेचाथे । पेचिध्वे । पेचे । पेचिवहे । पेचिमहे । क्रादिनियमादिट् । **पक्तेति** ॥ तासि 'चो कु.' पक्ष्यति । पक्ष्यते । पचतु । पचताम् । अपचत् । अपचत । पचेत् । **पक्षीष्टेति** ॥ आशीर्लिङि तङि सीयुटि 'चो कु' षत्वम् । अपाक्षीत् । अपक्त । अपक्षाताम् । अपक्ष्यत् । अपक्ष्यत । षचधातुः षोपदेश. । तदाह । **सचति–सचते इति** ॥ सेडयम् । ससाच । सेचतुः । सेचुः । सेचिथ । सेचथु । सेच । ससाच–ससच । सेचिव । सेचिम । सेचे । सेचिषे । सेचिवहे । सेचिमहे । सच्यात् । सचिषीष्ट । असाचीत्–असचीत् । असचिष्ट । भजधातुरनिट् । भजति । किति लिटि वैरूप्यापादकादेशादित्वात् 'अत एक हल्मध्ये' इत्यप्राप्तौ 'तृ फल' इत्येत्त्वाभ्यासलोपौ । तदाह । **भेजतुरिति** ॥ भारद्वाजनियमात्थलि वेट् । तदाह । **भेजिथ–बभक्थेति** ॥ इट्पक्षे 'थलि च सेटि' इत्येत्त्वाभ्यासलोपौ इति भावः । भेजिव । भेजिम । क्रादिनियमादिट् । भेजे । भेजिषे । भेजिवहे । भक्तेत्यादि सुगमम् । **रञ्ज रागे इति** ॥ नोपधोऽयम् । कृतानुस्वारपरसवर्णनिर्देश. । अनिडयम् । शप· पित्त्वेन ङित्त्वाभावात् 'अनिदिताम्' इत्यप्राप्तावपि 'रञ्जेश्च' इति शपि नलोप । तदाह । **रजति–रजते इति** ॥ सयोगात्परत्वाल्लिटो न कित्त्वम् । ररञ्ज । ररञ्जतुः । भारद्वाजनियमात्थलि वेट् । ररञ्जिथ–ररङ्क्थ । अनिट्पक्षे जस्य कुत्वेन गः । ततोऽनुस्वारपरसवर्णञकारनिवृत्तौ गस्य चर्त्वेन क. । नस्यानुस्वारे तस्य परसवर्णो ङकार इति भावः । ररञ्जिव । ररञ्जिम । क्रादिनियमादिट् । रङ्क्ता । रङ्क्ष्यति । रङ्क्ष्यते । रजतु । रजताम् । अरजत् । अरजत । रजेत् । आशीर्लिङि यासुट कित्त्वात् 'अनिदिताम्' इति नलोपः। तदाह । **रज्यादिति । रङ्क्षीष्टेति** ॥ आत्मनेपदे लिङः सीयुटि जस्य कुत्वेन गः तत परसवर्णसम्पन्नञकारनिवृत्ति गस्य क. नस्य परसवर्णेन ङ· षत्वमिति भावः । **अराङ्क्षीदिति** ॥ सिचि हलन्तलक्षणवृद्धौ कुत्वादि पूर्ववत् । अनेकहल्व्यवधानेऽपि हलन्तलक्षणा वृद्धिः प्रवर्तते इति भाष्ये स्पष्टम् । **अराङ्क्तामिति** ॥ 'झलो झलि' इति सलोप. । कुत्वादि पूर्ववत् । **अरङ्क्तेति** ॥ लुङस्तङि प्रथमपुरुषैकवचने 'झलो झलि' इति सलोपे कुत्वादि । **शप आक्रोशे इति** ॥ अनिडयम् । भारद्वाजनियमात्थलि वेट् । वमादौ तु क्रादिनियमादिट् । **अशाप्सीदिति** ॥ हलन्तलक्षणा वृद्धिः । **अशप्तेति** ॥ 'झलो झलि' इति सलोपः । अशप्साताम् । त्विषधातुरनिट् । शपि लघूपधगुण· । तदाह । **त्वेषति–त्वेषते इति** ॥ तित्वेष । तित्विषतुः । तित्विषुः ।

त्विष्यात् । त्विक्षीष्ट । अत्विक्षन् । अत्विक्षत । अत्विक्षाताम् । अत्विक्षन्त । यज १००२ देवपूजासङ्गतिकरणदानेषु । यजति--यजते ।

## २४०८ । लिट्यभ्यासस्योभयेषाम् । (६-१-१७)

वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं स्याल्लिटि । इयाज ।

## २४०९ । वचिस्वपियजादीनां किति । (६-१-१५)

वचिस्वप्योर्यजादीनां च सम्प्रसारणं स्यात्किति । पुनःप्रसङ्गविज्ञाना-

तित्वेषिथ । तित्विषथुः । तित्विष । तित्वेष । तित्विषिव । तित्विषिम । क्रादिनियमादिट् । **तित्विषे इति** ॥ तित्विषाते । तित्विषिरे । तित्विषिषे । तित्विषाथे । तित्विषिध्वे । तित्विषे । तित्विषिवहे । तित्विषिमहे । **त्वेष्टेति** ॥ तासि तकारस्य ष्टुत्वम् । **त्वेक्ष्यति । त्वेक्ष्यते इति** ॥ स्ये कुत्वषत्वे । त्वेषतु । त्वेषताम् । अत्वेषत् । अत्वेषत । त्वेषेत् । त्वेषेत । **त्विष्यादिति** ॥ यासुटः आशीर्लिङि कित्त्वान्न लघूपधगुणः । **त्विक्षीष्टेति** ॥ 'लिङ् सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः । लुङि परस्मैपदे 'शल इगुपधात' इति च्लेः क्सः । कित्त्वान्न गुणः । तदाह । **अत्विक्षदित्यादि** ॥ लुङि आत्मनेपदे च्लेः क्सादेशं मत्वा आह । **अत्विक्षतेति** । **अत्विक्षन्तेति** ॥ अत्विक्ष झ इति स्थिते 'क्सस्याचि' इत्यन्त्यलोपासम्भवादतः परत्वात् 'आत्मनेपदेष्वनतः' इत्यदादेशासम्भवादन्तादेशे क्सस्यान्त्यलोपे पररूपे वा रूपमिति भावः । **यज देवपूजेति** ॥ अनिडयम् । **यजति–यजते इति** ॥ देवान् पूजयति सङ्गमयति ददाति वेत्यर्थः । णलि द्वित्वादौ तु ययाज इति स्थिते 'लिट्यभ्यासस्योभयेषाम्' 'ष्यङः सम्प्रसारणम्' इत्यतः सम्प्रसारणमित्यनुवर्तते । 'वचिस्वपियजादीनाम्' इति सूत्रोपात्ताः 'ग्रहिज्या-वयि' इति सूत्रोपात्ताश्च उभयशब्देन गृह्यन्ते । तदाह । **वच्यादीनां ग्रह्यादीनाञ्चेति** ॥ अत्र वच्यादीनामित्यनेन वचिः स्वपिः यजादयश्च विवक्षिताः । 'यज देवपूजा' इत्यारभ्य 'टु ओ श्वि गतिवृद्ध्योः' इत्येतत्पर्यन्ताः यजादयः । तदुक्तम् 'यजिर्वपिर्वहिश्चैव वसिर्वेञ्व्येञ्ह्वेञ् इत्यपि । ह्वेञ् वदिः श्वयतिश्चैव यजाद्यास्स्युरिमे नव' इति तेष्वनन्तर्भावाद्वचिस्वप्योः पृथग्ग्रहणम् । ग्रह्यादीना-मित्यनेन तु ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतयो विवक्षिताः । **इयाजेति** ॥ अभ्यासयकारस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपमिति भावः । यज् अतुस् इति स्थिते द्वित्वे अभ्यासयकारस्य सम्प्रसारणे पूर्वरूपे च इयजतुरिति प्राप्ते । **वचिस्वपि** ॥ वचि-स्वपीति इका निर्देशः । सौत्रः सम्प्रसारणाभावः । आदिशब्दो यजिनैव सम्बध्यते, न तु वचिस्वपिभ्याम्, तथा सति हि वच्यादेः स्वप्यादेर्यजादेश्चेत्यर्थः स्यात् । तथा सति पृथक्स्वपि-ग्रहणं व्यर्थं स्यात् । अदादिगणे लुग्विकरणे 'वच परिभाषणे' इत्यारभ्य पठ्यस्य 'ञि ष्वप शये' इत्यस्य वच्यादिग्रहणेनैव सिद्धेः । तदाह । **वचिस्वप्योर्यजादीनाञ्चेति** ॥ ननु यज् अतुस् इति स्थिते द्वित्वात्परत्वात्सम्प्रसारणे कृते 'विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायेन द्वित्वस्य कथं प्राप्तिरित्याशङ्क्याह । **पुनःप्रसङ्गेति । ईजतुरिति** ॥ यज अतुस् इति

द्वित्वम्। ईजतुः। ईजुः। इयजिथ—इयष्ठ। ईजे। यष्टा। यक्ष्यति। यक्ष्यते। इज्यात्। यक्षीष्ट। अयाक्षीत्। अयष्ट। डु वप् १००३ बीजसन्ताने। बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानं च। अयं छेदनेऽपि। केशान्वपति। उवाप—ऊपे। वप्ता। उप्यात्। वप्सीष्ट। प्रण्यवाप्सीत्—अवप्त। वह १००४ प्रापणे।

स्थिते सम्प्रसारणे पूर्वरूपे च कृते द्वित्वे सवर्णदीर्घ इति भाव᳚। एवञ्चात्र लिटि किति 'वचिस्वपि' इति सूत्रम्। अकिति लिटि तु 'लिट्यभ्यासस्य' इति सूत्रमिति स्थितिः। भारद्वाजनियमात्थलि वेट्। कृते द्वित्वे अकित्त्वाद्वचिस्वपीत्यप्रवृत्तौ 'लिट्यभ्यासस्य' इत्यभ्यासयकारस्य सम्प्रसारणम्। तदाह। **इयजिथ—इयष्ठेति**॥ अनिट्पक्षे व्रश्चादिना जस्य षत्वे ष्टुत्वेन थस्य ठ.। ईजथु। ईज। इयाज—इयज। ईजिव। ईजिम। **ईजे इति**॥ 'असयोगात्' इति कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणे कृते द्वित्वे सवर्णदीर्घ इति भाव.। ईजाते। ईजिरे। क्रादिनियमादिट्। ईजिषे। ईजाथे। ईजिध्वे। ईजे। ईजिवहे। ईजिमहे। **यष्टेति**॥ तासि व्रश्चादिना जस्य षत्वे ष्टुत्वेन तकारस्य ट। **यक्ष्यति—यक्ष्यते इति**॥ व्रश्चादिना जस्य षत्वे 'षढो' इति षस्य कत्वे सस्य षत्वमिति भाव.। यजतु। यजताम्। अयजत्। अयजत। यजेत्। यजेत। आशीर्लिडि आह। **इज्यादिति**॥ यासुट᳚ कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणमिति भाव᳚। **यक्षीष्टेति**॥ आशीर्लिडि आत्मनेपदे प्रथमैकवचने सीयुटि जस्य षत्वे तस्य कत्वे सस्य षत्वमिति भाव। **अयाक्षीदिति**॥ सिचि हलन्तलक्षणा वृद्धि.। जस्य ष. तस्य क᳚ सस्य ष इति भाव। **अयष्टेति**॥ अयज् स् त इति स्थिते 'झलो झलि' इति सलोपे जस्य ष ष्टुत्वेन तकारस्य ट इति भाव। अयक्षाताम्। अयक्षत। अयक्ष्यत्। अयक्ष्यत। **डु वप् बीजसन्ताने इति**॥ प्ररोहार्थम्बीजाना क्षेत्रेषु प्रक्षेपणे इत्यर्थः। तदाह। **क्षेत्रे विकिरणमिति**॥ वपि. प्रकिरणार्थ इति 'सन्यडो' इत्यत्र भाष्यम्। **गर्भाधानञ्चेति**॥ "अप्रमत्ता रक्षत तन्तुमेत मा व क्षेत्रे परबीजानि वाप्सु" इत्यादौ तथा दर्शनादिति भावः। **अय छेदनेऽपीति**॥ वर्तते इति शेष। **केशान् वपतीति**॥ छिनत्तीत्यर्थ᳚। अनिडयम्। **उवापेति**॥ 'लिट्यभ्यासस्य' इत्यकित्यभ्यासस्य सम्प्रसारणमिति भावः। किति तु 'वचिस्वपि' इति द्वित्वात्प्राक्सम्प्रसारणे कृते द्वित्वम्। ऊपतु᳚। ऊपु। उवपिथ। उवप्थ। ऊपथुः। ऊप। उवाप—उवप। ऊपिव। ऊपिम। **ऊपे इति**॥ ऊपाते। ऊपिरे। ऊपिषे। ऊपाथे। ऊपिध्वे। ऊपे। ऊपिवहे। ऊपिमहे। **वप्तेति**॥ वप्स्यति। वप्स्यते। वपतु। वपताम्। अवपत्। अवपत। वपेत्। वपेत। **उप्यादिति**॥ आशिषि यासुट कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणम्। **वप्सीष्टेति**॥ सीयुटि रूपम्। **प्रण्यवाप्सीदिति**॥ लुडि परस्मैपदे सिचि हलन्तलक्षणा वृद्धि। 'नेर्गद' इति णत्वम्। अवाप्ताम्। अवाप्सुः। **अवप्तेति**॥ आत्मनेपदे लुडि 'झलो झलि' इति सलोप। अवप्साताम्। **वह प्रापणे इति**॥ अयमनिट्। वहति—वहते। **उवाहेति**॥ 'लिट्यभ्यासस्य' इति किति अभ्यासस्य सम्प्रसारणमिति भाव। किति 'वचिस्वपि' इति सम्प्रसारणे कृते द्वित्वम्। ऊहतुः। ऊहुः। भारद्वाजनियमा

उवाह । उवहिथ । 'सहिवहोरोदवर्णस्य' (सू २३५७) । उवोढ । ऊहे । वोढा । वक्ष्यति—वक्ष्यते । अवाक्षीत् । अवोढाम । अवाक्षुः । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवोढ्वम् । वस १००५ निवासे । परस्मैपदी । वसति । उवास ।

## २४१० । शासिवसिघसीनाञ्च । (८-३-६०)

**इण्कुभ्यां परस्यैषां सस्य षः स्यात् । ऊषतुः । ऊषुः । उवसिथ—उवस्थ । वस्ता । 'सः स्यार्धधातुके' (सू २३४२) वत्स्यति । उष्यात् । अवात्सीत् । अवात्ताम । वेञ् १००६ तन्तुसन्ताने । वयति—वयते ।**

त्थलि वेट् । तदाह । **उवहिथेति** ॥ 'न शसदद' इति निषेधात । 'थलि च सेटि' इति न भवति । अथ थलि अनिट्पक्षे आह । **सहिवहोरोदवर्णस्येति** ॥ सहिवहोरवर्णस्य ओत्स्याड्ढलोपे परत इत्यर्थः । ढ्लोप इति दीर्घम्बाधित्वा ओत्त्वमिति भावः । **उवोढेति** ॥ उवह् थ इति स्थिते ढत्वधत्वष्टुत्वढलोपाः ओत्त्वञ्चेति भावः । ऊहथुः । ऊह । उवाह—उवह । ऊहिव । ऊहिम । क्रादिनियमादिट् । **ऊहे इति** ॥ ऊहाते । ऊहिरे । ऊहिषे । ऊहाथे । ऊहिध्वे । ऊहे । ऊहिवहे । ऊहिमहे । **वोढेति** ॥ तासि ढत्वधत्वष्टुत्वढलोपाः ओत्त्वञ्च । लृटि स्ये हस्य ढः तस्य कः षत्वम् । तदाह । **वक्ष्यति—वक्ष्यते इति** ॥ वहतु । वहताम् । अवहत् । अवहत । वहेत् । उह्यात् । **अवाक्षीदिति** ॥ हलन्तलक्षणवृद्धौ ढकषा प्राग्वत् । **अवोढामिति** ॥ 'झलो झलि' इति सलोपे ढत्वधत्वष्टुत्वढलोपाः ओत्त्वञ्चेति भावः । **अवाक्षुरिति** ॥ उसि सिचि वृद्धौ ढकषाः । अवाक्षीः । अवोढम् । अवोढ । अवाक्षम् । अवाक्ष्व । अवाक्ष्म । **अवोढेति** ॥ लुङि आत्मनेपदे प्रथमपुरुषैकवचने अवह् स त इति स्थिते सलोपः ढत्वधत्वष्टुत्वढलोपाः ओत्त्वञ्च । **अवक्षातामिति** ॥ आताम् इति सिचि ढकषा इति भावः । **अवक्षतेति** ॥ 'आत्मनेपदेष्वनतः' इत्यदादेशः । **अवोढ्वमिति** ॥ अवक्षि । अवक्ष्वहि । अवक्ष्महि । अवक्ष्यत् । अवक्ष्यत । इति वहत्यन्ताः स्वरितेतो गताः । वसधातुरनिट् । अकिति लिटि परे 'लिट्यभ्यासस्य' इत्यभ्यासस्य सम्प्रसारणम् । तदाह । **उवासेति** ॥ किति तु 'वचिस्वपि' इति सम्प्रसारणे कृते ऊस अतुस् इति स्थिते सकारस्य आदेशप्रत्ययावयवत्वाभावादप्राप्ते षत्वे । **शासिवसि** ॥ 'सहेस्साडस्सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । 'इण्कोः' इति 'अपदान्तस्य मूर्धन्यः' इति चाधिकृतम । तदाह । **इण्कवर्गाभ्यामिति** ॥ भारद्वाजनियमात्थलि वेट् इति मत्वा आह । **उवसिथ-उवस्थेति** ॥ 'न शसदद' इति निषेधात् 'थलि च सेटि' इति न भवति । ऊषथुः । ऊष । उवास—उवस । ऊषिव । ऊषिम । क्रादिनियमादिट् । वस् स्यतीति स्थिते आह । **सस्स्यार्धधातुके इति** ॥ अनेन सकारस्य तकार इति भावः । वसतु । अवसत् । वसेत् । **उष्यादिति** ॥ आशीर्लिङि यासुट. कित्त्वात् वस्य सम्प्रसारणे 'शासिवसि' इति षत्वमिति भावः । **अवात्सीदिति** ॥ सिचि

## २४११ । वेञो वयिः । (२-४-४१)

वा स्याल्लिटि । इकार उच्चारणार्थः । उवाय ।

## २४१२ । ग्रहिज्याविव्यधिवष्टिविचतिवृश्चति-पृच्छतिभृज्जतीनां ङिति च । (६-१-१६)

एषां किति ङिति च सम्प्रसारणं स्यात् । यकारस्य प्राप्ते ।

## २४१३ । लिटि वयो यः । (६-१-३८)

वयो यस्य सम्प्रसारणं न स्याल्लिटि । ऊयतुः । ऊयुः ।

## २४१४ । वश्चास्यान्यतरस्यां किति । (६-१-३९)

वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः । ऊवुः । वयेस्तासावभा-

---

हलन्तलक्षणवृद्धौ सस्य तकार । **अवात्तामिति** ॥ अवस् स् तामिति स्थिते वृद्धौ 'झलो झलि' इति सलोपे प्रत्ययलक्षणमाश्रित्य सकाराद्यार्धधातुकपरत्वात् धातुसकारस्य 'सस्सि' इति तकारः । वस्तुतस्तु सिज्लोपस्यासिद्धत्वात् 'सस्सि' इति तकारे सिज्लोप इति बोध्यम् । अवात्सु. । अवात्सीः । अवात्तम् । अवात्त । अवात्सम् । अवात्स्व । अवात्स्म । अवत्स्यत् । वेञ्धातुरनिट् । ञित्त्वादुभयपदी । तन्तुसन्तानः पटनिर्माणार्थन्तन्तूनान्तिर्यगतिर्यक्प्रसारणविशेष । **वयति–वयते इति** ॥ शपि गुणायादेशौ । **वेञो वयिः** ॥ शेषपूरणेन सूत्र व्याचष्टे । **वा स्याल्लिटीति** ॥ 'लिट्यन्यतरस्याम्' इत्यतः अन्यतरस्यामित्यनुवृत्तेरिति भावः । **उच्चारणार्थ इति** ॥ इकारस्य इत्सञ्ज्ञकत्वे तु नुम् स्यादिति भाव । **उवायेति** ॥ णलि वयादेशे यजादित्वादकिति लिटि परे 'लिट्यभ्यासस्य' इति वकारस्य सम्प्रसारणे उपधावृद्धिरिति भाव. । अत्र यकारस्य तु न सम्प्रसारणम् । 'लिटि वयो यः' इति तन्निषेधस्यानुपदमेव वक्ष्यमाणत्वादिति भाव । यद्यपि णलि वयादेशाभावेऽपि द्वित्वे अभ्यासस्य सम्प्रसारणे 'अचो ञ्णिति' इति वृद्धौ आयादेशे उवायेति सिध्यति । तथापि ऊयतुरित्याद्यर्थं वयादेशस्य आवश्यकत्वादिहापि वयादेशो न्याय्यत्वादुपन्यस्तः । वे अतुस् इति स्थिते वयादेशे कृते । **ग्रहिज्या** ॥ चकारेण 'वचिस्वपियजादीनाम्' इत्यत. कितीति समुच्चीयते । ष्यङस्सम्प्रसारणमित्यतः सम्प्रसारणमित्यनुवर्तते । तदाह । **एषामित्यादि** ॥ अत्र परस्मैपदिग्रह्यादिसाहचर्यात् 'अयवयपय' इति पठितस्यात्मनेपदिनो वयेर्न ग्रहणम् । यजादित्वादेव वये सम्प्रसारणे सिद्धे अत्र वयग्रहण स्पष्टार्थमिति भाष्ये स्पष्टम् । **इति यकारस्य प्राप्ते इति** ॥ 'न सम्प्रसारणे सम्प्रसारणम्' इति लिङ्गादन्त्यस्य यण. पूर्व सम्प्रसारणमिति विज्ञानाद्यकारस्य सम्प्रसारणे प्राप्ते सतीत्यर्थः । **लिटि वयो** ॥ **सम्प्रसारणन्नेति** ॥ 'न सम्प्रसारणे सम्प्रसारणम्' इत्यत तदनुवृत्तेरिति भावः । तथा च यकारस्य सम्प्रसारणनिषेधे वकारस्य सम्प्रसारणमिति भाव. । तदाह । **ऊयतुरिति** ॥ **वश्चास्य** ॥ 'लिटि वयो यः' इत्यनुवर्तते । तदाह । **वयो यस्येत्यादि** ।

वात्थलि नित्यमिट् । उवयिथ । स्थानिवद्भावेन त्रित्त्वात्तङ् । ऊये । ऊवे । वयादेशाभावे ।

### २४१५ । वेञः । (६-१-४०)

**वेञो न सम्प्रसारणं स्याल्लिटि। ववौ । ववतुः । ववुः । वविथ—ववाथ । ववे । वाता । ऊयात् । वासीष्ट । अवासीत् । व्येञ् १००७ संवरणे । व्ययति । व्ययते ।**

**उवयिथेति** ॥ अकित्त्वान्न वः । अजन्तत्वादकारवत्त्वाच्च थलि इण्निषेधमाशङ्क्याह । **वयेस्तासावभावात्थलि नित्यमिडिति** ॥ वयेर्लिट्येव विहितत्वेन तासावभावात् 'अच-स्तास्वत्' इति 'उपदेशेऽत्वत' इति च इण्निषेधाप्रसक्त्या क्रादिनियमान्नित्यमिडित्यर्थः । 'यस्तासावस्ति नित्यानिट् च' इति भाष्यम् । ऊयथु—ऊवथुः । ऊय—ऊव । उवाय—उवय । ऊयिव—ऊविव । ऊयिम—ऊविम । ननु वयेरङित्त्वात् कथमुभयपदित्वमित्यत आह । **स्थानिवद्भावेनेति। ऊये-ऊवे इति** ॥ 'वश्चास्यान्यतरस्याम्' इति वत्वविकल्पः । वत्वाभावे 'लिटि वयो यः' इति यकारस्य सम्प्रसारणनिषेधः । वकारस्य 'ग्रहिज्या' इति 'वचिस्वपि' इति वा सम्प्रसारणम् । ऊयाते । ऊयिरे । ऊयिषे । ऊयाथे । ऊयिध्वे । ऊये । ऊयिवहे । ऊयिमहे । क्रादिनियमादिट् । एवं ऊवाते । ऊविरे । इत्यादि । **वयादेशाभावे इति** ॥ यजादित्वात् 'लिट्यभ्यासस्य' इति 'वचिस्वपि' इति च सम्प्रसारणे प्राप्ते सति शेषः । **वेञः** ॥ 'लिटि वयो यः' इत्यतो लिटीति 'न सम्प्रसारणे सम्प्रसारणम्' इत्यतो न सम्प्रसारणमिति चानुवर्तते । तदाह । **वेञो नेति** ॥ अत्र कितीति नानुवर्तते । तदाह । **ववाविति** ॥ णलि सम्प्रसारणनिषेधे 'आदेच उपदेशे' इत्यात्वे 'आत औ णलः' इत्यौ-भावे 'वृद्धिरेचि' इति वृद्धौ रूपम् । **ववतुरिति** ॥ 'आदेच' इत्यात्वे 'आतो लोपः' । एवं ववुः । भारद्वाजनियमात्थलि वेट् । वेञस्तासावनिट्कत्वात् । तदाह । **वविथ ववाथेति**॥ इट्पक्षे अकित्त्वेऽपि इटपरत्वादाल्लोप इति भावः । ववथुः । वव । ववौ । वविव । वविम । क्रादिनियमादिट् । **ववे इति** ॥ ववाते । वविरे । वविषे । ववाथे । वविध्वे । ववे । वविवहे । वविमहे । **वातेति** ॥ लुटि तासि आत्वम् । वास्यति । वास्यते । वयतु । वयताम् । अवयत् । अवयत । वयेत् । वयेत । **ऊयादिति** ॥ आशीर्लिङि यासुटि आत्वे कित्वात् 'वचिस्वपि' इति सम्प्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयोः' इति दीर्घ इति भावः । **वासी-ष्टेति** ॥ आशीर्लिङि आत्मनेपदे सीयुटि आत्त्वे रूपम् । वासीयास्ताम् । **अवासीदिति** ॥ आत्वे कृते इट् सकौ । अवास् इ स् ईदिति स्थिते 'इट ईटि' इति सिज्लोपः । अवासिष्टा-मित्यादि । आत्मनेपदे, अवास्त । अवासाता, इत्यादि । अवास्यत् । अवास्यत । **व्येञ् । संवरणे इति** ॥ ञित्वादुभयपदी । अनिट् । **व्ययति-व्ययते इति** ॥ शपि गुणाया-

## २४१६। न व्यो लिटि। (६-१-४६)

व्येञ आत्त्वं न स्याल्लिटि। वृद्धिः। परमपि हलादिशेषं बाधित्वा यस्य सम्प्रसारणम्। उभयेषां ग्रहणसामर्थ्यात्। अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे किं तेन। विव्याय। विव्यतुः। विव्युः। 'इडत्त्यर्ति—' (सू २३८४) इति नित्यमिट्। विव्ययिथ। विव्याय—विव्यय। विव्ये। व्याता। वीयात्। व्यासीष्ट। अव्यासीत्। अव्यास्त। ह्वेञ् १००८ स्पर्धायां शब्दे च। ह्वयति। ह्वयते।

---

देशौ। णलादौ तु आत्त्वे विव्यौ विव्यतुरित्यादि प्राप्तम्। तत्राह। **न व्यो लिटि**॥ व्ये इत्यस्य कृतात्त्वस्य षष्ठ्यन्तस्य व्यः इति निर्देश। **आत्त्वमिति**॥ 'आदेच उपदेशे' इत्यत. तदनुवृत्तेरिति भाव। **वृद्धिरिति**॥ णलि व्ये अ इति स्थिते 'अचो ञ्णिति' इति वृद्धि-रित्यर्थ॰। तथाच व्यै अ इति स्थितम्। ननु तत्र द्वित्वे 'लिट्यभ्यासस्य' इत्यभ्यासे यकारस्य सम्प्रसारणे पूर्वरूपे उत्तरखण्डस्य आयादेशे विव्याय इति रूप वक्ष्यति। तदयुक्तम्। सम्प्र-सारणात्प्राक् परत्वात् हलादिशेषेण यकारस्य निवृत्तौ वकारस्य सम्प्रसारणे उकारे सति उ-व्यायेत्यापत्तेरित्यत आह। **परमपीति**॥ **उभयेषामिति**॥ 'लिट्यभ्यासस्य' इति सूत्रे उभयेगामिति ग्रहणसामर्थ्यादित्यर्थ। तदेवोपपादयति। **अन्यथेति**॥ 'वचिस्वपियजादी-नाम्' इत्यस्य 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतिनाम्' इत्यस्य च स्वरित-त्वादेवात्रानुवृत्त्यैव सिद्धे पुनर्लिट्यभ्यासस्य इत्यत्र उभयेषा ग्रहण पुनर्विधानार्थम्। तथाच वच्यादीना ग्रह्यादीनाञ्चाभ्यासस्य सम्प्रसारण स्याल्लिटीति द्विर्विधान लब्धम्। तत्र द्वितीय विधान नियमार्थम्। उभयेषामभ्यासस्य सम्प्रसारणमेव स्यान्नेतरदिति। तेनाभ्यासे एतत्स-म्प्रसारणविषये कार्यान्तरनिवृत्तिस्सिद्धेत्यर्थः। तथाच प्रकृते अभ्यासयकारस्य सम्प्रसारणे सिद्ध रूपमाह। **विव्यायेति। विव्यतुः। विव्युः इति**॥ 'वचिस्वपि' इति सम्प्रसारणे द्वित्वे यणिति भाव॰। थलि भारद्वाजनियमादिड्विकल्पमाशङ्क्याह। **इडत्त्यर्तीति**॥ **विव्ययिथे-ति**॥ अकित्त्वादभ्यासस्य सम्प्रसारणमिति भाव.। विव्यथु। विव्य। **विव्याय-विव्य-येति**॥ अकित्त्वादभ्यासस्य सम्प्रसारणे णित्त्वविकल्पाद्वृद्धिविकल्प इति भावः। विव्यिव। विव्यिम। **विव्ये इति**॥ कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणे पूर्वरूपे वि इत्यस्य द्वित्वे यणिति भाव.। विव्याते। विव्यिरे। विव्यिषे। विव्याथे। विव्यिध्वे। विव्ये। विव्यिवहे। विव्यिमहे। **व्यातेति**॥ तासि एकारस्य आत्त्वम्। व्यास्यति। व्ययतु। व्ययताम्। अव्ययत्। अव्ययत। व्ययेत्। **वीयादिति**॥ कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयो.' इति दीर्घ.। वीयास्ताम्। **व्यासीष्टेति**॥ आशीर्लिङि सीयुटि आत्त्वम्। **अव्यासीदिति**॥ लुङि सिचि आत्त्वे इट्सकोः सिज्लोपः। अव्यासिष्टामित्यादि। **अव्यास्तेति**॥ लुङि आत्मनेपदे अव्ये स् त इति स्थिते आत्त्वमिति भावः। अव्यासाता-मित्यादि। अव्यास्यत्। अव्यास्यत। ह्वेञ् धातुरनिट्। ञित्त्वादुभयपदी। **शब्दे चेति**॥

## २४१७ । अभ्यस्तस्य च । (६-१-३३)

अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं स्यात् । ततो द्वित्वम् । जुहाव । जुहुवतुः । जुहुवुः । जुहोथ–जुहविथ । जुहुवे । ह्वाता । हूयात् । ह्वासीष्ट ।

## २४१८ । लिपिसिचिह्वश्च । (३-१-५३)

एभ्यश्च्लेरङ् स्यात् ।

## २४१९ । आत्मनेपदेष्वन्यतरस्याम् । (३-१-५४)

'आतो लोपः' (सू २३७२) । अह्वत । अह्वेताम् । अह्वन्त । अह्वत । अह्वास्त ।

आकारणार्थः आगच्छेत्यादिशब्दोऽत्र विवक्षितः । **ह्वयति–ह्वयते इति** ॥ शपि गुणायादेशौ । णलादौ अकिति 'लिट्यभ्यासस्य' इति अभ्यासस्यैव सम्प्रसारणे प्राप्ते । **अभ्यस्तस्य च** ॥ 'ह्वः सम्प्रसारणम्' इत्यनुवर्तते । ह्व इति कृतात्त्वस्य ह्वे इत्यस्य षष्ठ्यन्तम् । तथाच अभ्यस्तीभूतस्य ह्वेञ सम्प्रसारणमिति लभ्यते । तथा सति णलि ह्वे अ इति स्थिते द्वित्वे कृते 'उभे अभ्यस्तम्' इत्यभ्यस्तसञ्ज्ञायामुत्तरखण्डस्य सम्प्रसारणे कृते पूर्वखण्डस्याभ्यासस्य 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधः स्यादित्यत आह । **अभ्यस्तीभविष्यतः इति** ॥ ननु यद्यभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं तर्हि द्वित्वं बाधित्वा परत्वात्सम्प्रसारणे सति 'विप्रतिषेधे यद्बाधितन्तद्बाधितम्' इति न्यायात् द्वित्वन्न स्यादित्यत आह । **ततो द्वित्वमिति** ॥ सम्प्रसारणानन्तरं द्वित्वमित्यर्थः । 'पुनः प्रसङ्गविज्ञानात्' इति भावः । तथाच णलि आत्त्वे कृते सम्प्रसारणे पररूपे हु इत्यस्य द्वित्वे 'कुहोश्चुः' इति श्चुत्वे तस्य जश्त्वे 'अचो ञ्णिति' इति वृद्धौ आवादेशे परिनिष्ठितं रूपमाह । **जुहावेति** । **जुहुवतुरिति** ॥ अतुसि आत्त्वे आल्लोपम्बाधित्वा अन्तरङ्गत्वात् 'अभ्यस्तस्य च' इत्यनेन सम्प्रसारणे 'वार्णादाङ्गम्बलीयः' इत्यस्यानित्यतया अन्तरङ्गात्पूर्वरूपे कृते द्वित्वे उवङिति भावः । यद्यपि किति 'वचिस्वपि' इति सम्प्रसारणेऽपि सिद्धमिदम् । तथापि अकिति आवश्यकमभ्यस्तस्यचेत्येतत् न्याय्यत्वादिहापि भवतीति बोध्यम् । एवं जुहुवुः । भारद्वाजनियमात्थलि वेट् । तदाह । **जुहोथ–जुहविथेति** ॥ जुहुवथुः । जुहुव । जुहाव–जुहव । जुहुविव । जुहुविम । क्रादिनियमादिट् । जुहुवे । जुहुवाते । जुहुविरे । जुहुविषे । जुहुवाथे । जुहुविध्वे । जुहुवे । जुहुविवहे । जुहुविमहे । **ह्वातेति** ॥ तासि आत्त्वम् । ह्वास्यति । ह्वास्यते । ह्वयतु । ह्वयताम् । अह्वयत् । अह्वयत । ह्वयेत् । ह्वयेत । **हूयादिति** ॥ आशीर्लिङि आत्त्वे यासुटि कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयोः' इति दीर्घ इति भावः । **ह्वासीष्टेति** ॥ आशीर्लिङि सीयुटि रूपम् । लुङि विशेषमाह । **लिपिसिचि** ॥ लिपि सिचि ह्वा एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । 'च्लेः सिच्' इत्यतः च्लेरिति 'अस्यतिवक्तिख्यातिभ्यः' इत्यतः अङिति चानुवर्तते । तदाह । **एभ्यः इति** ॥ इदम्परस्मैपदविषयम् । आत्मनेपदे विकल्पविधानात् । तदाह । **आत्मनेपदेषु । आतः लोपः इति** ॥ अह्वा अ त् इति स्थिते 'आतो लोप इटि च' इत्याल्लोप इत्यर्थः । **अह्वदिति** ॥ अह्वताम् ।

अथ द्वौ परस्मैपदिनौ। वद १००९ व्यक्तायां वाचि । अच्छ वदति । उवाद । ऊदतुः । उवदिथ । वदिता । उद्यात् । 'वदव्रज—' (सू २२६७) इति वृद्धिः । अवादीत् । टु ओ श्वि १०१० गतिवृद्ध्योः । श्वयति ।

## २४२० । विभाषा श्वेः । (६-१-३०)

श्वयतेः सम्प्रसारणं वा स्याल्लिटि यङि च । शुशाव । शुशुवतुः । 'श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः' (वा ३४६२) । तेन 'लिट्यभ्यासस्य—'

---

**अह्वन्नित्यादि । अह्वतेति** ॥ लुङि आत्मनेपदे अङि रूपम् । अह्वेताम् । अह्वन्तेत्यादि । अङभावपक्षे त्वाह । **अह्वास्तेति** ॥ अह्वासाताम् । अह्वासत इत्यादि । अह्वास्यत् । अह्वास्यत । **वद व्यक्तायां वाचीति** ॥ अज्झल्विभागेन स्पष्टोच्चारणे इत्यर्थः । सेडयम् । अच्छ वदति । अच्छेत्यव्ययमाभिमुख्ये । अभिमुख वदतीत्यर्थः । 'अच्छ गत्यर्थवदेषु' इति गतित्वादच्छेत्यस्य धातोः प्रागेव प्रयोग इति भावः । अकिति लिटि द्वित्वे 'लिट्यभ्यासस्य' इति सम्प्रसारणमिति मत्वा आह । **उवादेति** ॥ किति लिटि तु 'वचिस्वपियजादीनाम्' इति द्वित्वात्प्राक् सम्प्रसारणे कृते द्वित्वे सवर्णदीर्घ इति भावः । **ऊदतुरिति । उवदिथेति** ॥ द्वित्वे अभ्यासस्य सम्प्रसारणमिति भावः । ऊदथुः । ऊद । उवाद–उवद । ऊदिव । ऊदिम । **वदितेति** ॥ तासि इट् । वदिष्यति । वदतु । अवदत् । वदेत् । **उद्यादिति** ॥ आशीर्लिङि यासुटः कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणमिति भावः । अवादीत् इत्यत्र हलन्तलक्षणवृद्धेः 'नेटि' इति निषेधेऽपि 'अतो हलादेः' इति वृद्धिविकल्पमाशङ्क्य वदधातोः पृथक् ग्रहणाद्वृद्धिरित्यभिप्रेत्याह । **वदव्रजेति वृद्धिरिति** ॥ एतदर्थमेव 'वदव्रजहलन्तस्य' इत्यत्र वदधातोः पृथक् ग्रहणमिति भावः । **टु ओ श्वि इति** ॥ टुरोकारश्चेत् । **श्वयतीति** ॥ शपि गुणायादेशौ । लिटि तु अकिति णलादौ 'लिट्यभ्यासस्य' इत्यभ्यासस्य नित्य सम्प्रसारणे प्राप्ते किति तु अतुसादौ द्वित्वात्प्राक् 'वचिस्वपि' इति नित्य सम्प्रसारणे प्राप्ते आह । **विभाषा श्वेः** ॥ **सम्प्रसारणमिति** ॥ 'ष्यङस्सम्प्रसारणम्' इत्यतस्तदनुवृत्तेरिति भावः । **लिटि यङि चेति** ॥ 'लिड्यङोः' इत्यनुवृत्तेरिति भावः । **शुशावेति** ॥ णलि अभ्याससम्प्रसारण बाधित्वा द्वित्वात्प्रागेव परत्वादनेन सम्प्रसारणे कृते ततो द्वित्वे वृद्ध्यावादेशाविति भावः । अकित्त्वाद्वचिस्वपीत्यस्य नात्र प्राप्तिः । तथाच लिड्वत्स्वेकवचनेषु द्वित्वात् प्रागप्राप्तस्य सम्प्रसारणस्य विकल्पविधिः । **शुशुवतुरिति** ॥ लिटि तु द्विवचनबहुवचनेषु द्वित्वात्प्राक् वचिस्वपीति सम्प्रसारणस्य विकल्पविधिः । तथाच उभयत्र विभाषेयम् । यङि तु अप्राप्तविभाषैवेयम् । शोशूयते । शेश्वीयते । तत्र णलि एतत्सम्प्रसारणाभावपक्षे श्वि इत्यस्य द्वित्वानन्तरमभ्याससम्प्रसारणे शुश्वाय इति प्राप्ते आह । **श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेध इति** ॥ लिट्यभ्याससम्प्रसारणस्य प्रतिषेधो वक्तव्य इत्यर्थः । तथाच श्वि इत्यभ्यासस्य सम्प्रसारणाभावादभ्यासे इकार एव श्रूयते इत्याह । **तेनेति** ॥ **शूयादिति** ॥ आशीर्लिङि यासुटः

(सू २४०८) इति सम्प्रसारणं न । शिश्वाय । शिश्वियतुः । श्वयिता । श्वयेन । शूयात् । 'जॄस्तम्भु—' (सू २२९१) इत्यङ् वा ।

## २४२१ । श्वयतेरः । (७-४-१८)

श्वयतेरिकारस्याकारः स्यादङि । पररूपम । अश्वत् । अश्वताम् । अश्वन् । 'विभाषा धेट्श्व्योः' (सू २३७५) इति चङ् । इयङ् । अशिश्वियत् । 'ह्म्यन्त—' (सू २२९९) इति न वृद्धिः । अश्वयीत् । वृत । यजादयो वृत्ताः । भ्वादिस्त्वाकृतिगणः । तेन चुलुम्पतीत्यादिसङ्ग्रहः । इति भ्वादयः ।

## २४२२ । ऋतेरीयङ् । (३-१-२९)

ऋतिः सौत्रस्तस्मादीयङ् स्यात्स्वार्थे । 'जुगुप्सायामयं धातुः' इति

---

कित्त्वाद्द्विस्वर्पाति सम्प्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयो' इति दीर्घ इति भावः । लुङि विशेषमाह । **जॄस्तम्भ्विति** ॥ तथाच अश्वि अ त् इति स्थिते इयङि प्राप्ते । **श्वयतेरः** ॥ श्वयते अः इति च्छेदः । श्वयतेरिति श्तिपा निर्देशः । श्विधातोरित्यर्थः । 'अलोऽन्त्यस्य' इत्यन्त्यस्य इकारस्येति लभ्यते । 'ऋदृशोऽङि' इत्यत अङीत्यनुवर्तते । तदाह । **श्वयतेरिकारस्येति** ॥ अश्व अ त् इति स्थिते सवर्णदीर्घमाशङ्क्याह । **पररूपमिति** ॥ आर्धधातुकोपदेशे अदन्तत्वाभावात न अल्लोपः । **अश्वन्निति** ॥ अश्व. । अश्वतम् । अश्वत । अश्वम् । अश्वाव । अश्वाम । अङभावपक्षे त्वाह । **विभाषेति** ॥ **इयङिति** ॥ 'चङि' इति द्वित्वमित्यपि ज्ञेयम् । तदाह । **अशिश्वियदिति** ॥ अङश्चङश्चाभावे तु अश्वि ईत् इति स्थिते इकारस्य सिचि वृद्धौ सत्या आयादेशे अश्वायीदिति प्राप्ते आह । **ह्म्यन्तेति न वृद्धिरिति** ॥ श्विग्रहणादिति भाव । नच 'नेटि' इत्येव सिचि वृद्धेः निषेधसिद्धेः पृथक् श्विग्रहण व्यर्थमिति वाच्यम् । 'नेटि' इति निषेधस्य हलन्तलक्षणवृद्धिमात्रविषयत्वात् । नच अश्वि ईत् इति स्थिते सिचि वृद्ध्यपेक्षया परत्वादन्तरङ्गत्वाच्च इकारस्य गुणे एकारे कृते इगन्तत्वाभावेन सिचि वृद्ध्यप्राप्त्या अयादेशे कृते यान्तत्वादेव हलन्तलक्षणवृद्धेर्निषेधसिद्धेः'ह्म्यन्त' इत्यत्र श्विग्रहण व्यर्थमिति वाच्यम् । अनवकाशतया अपवादत्वेन गुणम्बाधित्वा सिचि वृद्धेः प्राप्तौ तन्निषेधार्थत्वादित्यलम् । वृदित्यस्य व्याख्यान यजादयो वृत्ता इति । ननु भ्वादयो वृत्ता इति कुतो न व्याख्यायते इत्यत आह । **भ्वादिस्त्वाकृतिगणः इति** ॥ **चुलुम्पतीति** ॥ चुलुम्पधातुर्लोपार्थकः तस्यापि भ्वादिगणे पाठात् शब्विकरणत्वमिति भाव । **इति भ्वादयः इति** ॥ नचैव सति 'अद भक्षणे' इत्यादीना वक्ष्यमाणानां धातुत्व कथमित्याशङ्क्य शब्विकरणा. भ्वादयस्समाप्ता इत्यर्थात् । **ऋतेरीयङ्** ॥ ऋतेर्धातुपाठे अदर्शनादाह । **ऋतिः सौत्रः इति** ॥ **स्वार्थे इति** ॥ अर्थविशेषस्यानिर्देशादिति भावः । तकारान्तो धातुरयमिका निर्दिष्टः न त्विकारान्तः । इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धे ईकारोच्चारणवैयर्थ्यात् । नच

बहवः। 'कृपायां च' इत्येके। 'सनाद्यन्ताः—' (सू २३०४) इति धातुत्वम्। ऋतीयते। ऋतीयाञ्चक्रे। आर्धधातुकविवक्षायां तु 'आयादय आर्धधातुके वा' (सू २३०५) इतीयङभावे 'शेषात्कर्तरि—' (सू २१५९) इति परस्मैपदम्। आनर्त। अर्तिष्यति। आर्तीत्।

। इति तिङन्तभ्वादिप्रकरणम्।

---

इदन्तत्वे सति 'एरनेकाच' इति यण् स्यादिति वाच्यम्। एवमपि ऋतेडर्यः इति ङ्यप्रत्यये कृते 'अकृत्सार्वधातुकयोर्दीर्घ' इति दीर्घेणैव सिद्धे ईयङ्विधिवैयर्थ्यात्। **एके इति** ॥ अन्ये इत्यर्थः। ऋर्तायते इति। ईयङोऽदन्तत्वात् शपि पररूपम्। **ऋतीयाञ्चक्रे इति** ॥ 'कास्प्रत्ययात्' इत्याम्। ऋनीयिता। ऋतीयिष्यते। ऋतीयताम्। आर्तीयत। ऋतीयेत। ऋतीयिषीष्ट। आर्तीयिष्ट। आर्तीयिष्यत। **आनर्तेति** ॥ ऋत् इति तकारान्तात् लिटि णलि द्वित्वे उरदत्त्वे रपरत्वे हलादिशेषे 'अत आदेः' इत्यभ्यासस्य दीर्घे 'तस्मान्नुड्द्विहलः' इति नुट्। नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते इति उक्तेरिति भावः। आनृततु। आनृतुः। अनिट्सु अस्यापाठात् थलि नित्यमिट्। आनर्तिथ। आनृतथुः। आनृत। आनर्त। आनृतिव। आनृतिम। अर्तिता। अर्तिष्यति। ऋत्यात्। **आर्तीदिति** ॥ 'इट ईटि' इति सिज्लोपः। आडागमः। आर्तिष्यत् ॥

इति श्रीसिद्धान्तकौमुदीव्याख्यायां
वासुदेवदीक्षितविरचितायां बालमनोरमायां
॥ शब्विकरणनिरूपणम् ॥

। श्रीरस्तु ।

# ॥ अथ तिङन्तादादिप्रकरणम् ॥

अद् १०११ भक्षणे। द्वौ परस्मैपदिनौ।

### २४२३ । अदिप्रभृतिभ्यः शपः । (२-४-७२)

लुक्स्यात् । अत्ति । अत्तः । अदन्ति ।

### २४२४ । लिट्यन्यतरस्याम् । (२-४-४०)

अदो घस्ऌ वा स्याल्लिटि । जघास । 'गमहन—' (सू. २३६३) इत्युपधालोपः । तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद्घस्य चर्त्वम । 'शासिवसि—' (सू. २४१०) इति षत्वम् । जक्षतुः । जक्षुः । घसेस्तासावभावात्थलि नित्य-

अथ लुग्विकरणान् धातून्निरूपयितुमुपक्रमते । **अद भक्षणे इति** ॥ अनिडयम् । **अदिप्रभृतिभ्यः** ॥ 'ण्यक्षत्रियार्षञितः' इत्यतो लुगित्यनुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्र व्याचष्टे । **लुक् स्यादिति** ॥ अदिप्रभृतिभ्यः परस्य शपो लुगिति फलितम् । **अत्तीति** ॥ शपो लुकि दस्य चर्त्वेन तकारः । एवमत्त इत्यपि । **अदन्तीति** ॥ एतदर्थमेव 'झोऽन्तः' इत्यत्र अकारादिरादेश आश्रितः । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः । **लिट्यन्यतरस्याम्** ॥ 'अदो जग्धिः' इत्यतः अद इति 'लुङ्सनोर्घसॢ' इत्यतो घसॢ इति चानुवर्तते । तदाह । **अदः इति** ॥ आदेशे ऌकार इत् । घसादेशः अनिट् । **जघासेति** ॥ अकित्त्वात् 'गमहन' इत्युपधालोपो नेति भावः । जघस अतुसिति स्थिते आह । **गमहनेत्युपधालोपः इति** ॥ 'असयोगात्' इति कित्त्वादिति भावः । जघ्स् अतुसिति स्थिते घकारस्य चर्त्वं वक्ष्यन् उपधालोपस्य स्थानिवत्त्वमाशङ्कयाह । **तस्येति** ॥ उपधालोपस्येत्यर्थः। जघ्स् अतुसिति स्थिते सकारस्य आदेशप्रत्ययावयवत्वाभावादाह । **शासीति** ॥ थलि तु क्रादिनियमान्नित्यमिट् । 'उपदेशेऽत्वतः' इति निषेधस्य तासौ नित्यानिड्विषयत्वात्। घस् तु तासौ न विद्यत एव कुतस्तस्य तासावनिट्कत्वम्। 'यस्तासावस्ति अनिट् च' इति हि भाष्यम् । तदाह । **घसेस्तासाविति । जघसिथेति** ॥ जक्षथुः । जक्ष । जघास—जघस । जक्षिव ।

मिट्। जघसिथ। आद। आदतुः। 'इडत्त्यर्त्ति–' (सू २३८४) इति नित्यमिट्। आदिथ। अत्ता। अत्स्यति।

## २४२५। हुझल्भ्यो हेर्धिः। (६-४-१०१)

होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि। अत्तात्। अदानि।

## २४२६। अदः सर्वेषाम्। (७-३-१००)

अदः परस्यापृक्तसार्वधातुकस्याडागमः स्यात्सर्वमतेन। आदत्। आत्ताम्। आदन्। आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म। अद्यात्। अद्याताम्। अद्युः। अद्यास्ताम्। अद्यासुः।

## २४२७। लुङ्सनोर्घस्लृ। (२-४-३७)

अदो घस्लृ स्याल्लुङि सनि च। लृदित्त्वादङ्। अघसत्। हन १०१२ हिंसागत्योः। प्रणिहन्ति।

---

जक्षिम। घसादेशाभावपक्षे त्वाह। **आदेति** ॥ थलि भारद्वाजनियमादिड्विकल्पे प्राप्ते आह। **इडत्त्यर्तीति**। **आदिथेति** ॥ आदथु। आद। आद। आदिव। आदिम। अत्ता। **अत्स्यतीति** ॥ अनिट्। दस्य तः। अत्तु–अत्तात्। अत्ताम्। अदन्तु। अद् हि इति स्थिते 'झयो होऽन्यतरस्याम्' इति हकारस्य पूर्वसवर्णविकल्पेन धकारविकल्पे प्राप्ते। **हुझल्भ्यो हेर्धिः** ॥ **झलन्तेभ्यः इति** ॥ अङ्गविशेषणत्वात् तदन्तविधिरिति भाव.। अनेकाल्त्वात् सर्वादेशः। रुदिहीत्यत्र तु न। निर्दिश्यमानहेरिटा व्यवहितत्वात्। इट्सहितस्य त्वनिर्दिश्यमानत्वादिति भाष्ये स्पष्टम्। **अत्तादिति** ॥ धित्वात् परत्वात्तातङ्। तस्य स्थानिवत्त्वेन हित्वेऽपि न पुनर्धित्वम्। 'विप्रतिषेधे यद्बाधित तद्बाधितमेव' इति न्यायात्। अत्तम्। अत्त। **अदानीति** ॥ 'आडुत्तमस्य' इत्याडागमः। एतदर्थमेव आडागमे दीर्घोच्चारणमिति भावः। अदाव। अदाम। लङि आद् त् इति स्थिते। **अदः सर्वेषाम्** ॥ अद इति पञ्चमी। 'तस्मादित्युत्तरस्य इति परिभाषया परस्येति लभ्यते। 'गुणोऽपृक्ते' इत्यतः अपृक्ते इति 'तुरुस्तु शम्यमः' इत्यतस्सार्वधातुके इति चानुवर्तते। सप्तमीद्वयञ्च षष्ठ्या विपरिणम्यते। 'अड् गार्ग्यगालवयोः' इत्यतः अडित्यनुवर्तते। गार्ग्यगालवयोरित्यस्यानुवृत्तिनिवृत्तये सर्वेषामिति। तदाह। **अदः परस्येत्यादिना** ॥ टित्त्वादाद्यवयवः। तदाह। **आददिति** ॥ **आत्तामिति** ॥ अपृक्तग्रहणान्नाडागम इति भाव'। विधिलिङि रूपमाह। **अद्यादिति** ॥ शपो लुकि अतः परत्वाभावात् 'अतो येयः' इति नेति भावः। मिपः अमि यासुटि सलोपे सवर्णदीर्घे अद्याम्। अद्याव। अद्याम। आशीर्लिङि अद्यादिति सिद्धवत्कृत्याह। **अद्यास्तामिति** ॥ लुङि अद् स् त् इति स्थिते। **लुङ्सनोर्घस्लृ** ॥ 'अदो जग्धिः' इत्यत अद इत्यनुवर्तते। तदाह। **अदेरिति**॥ लृदित्त्वस्य प्रयोजनमाह। **लृदित्त्वादिति** ॥ हनधातुरनिट्। **प्रणिहन्तीति** ॥ शपो लुक्।

**२४२८ । अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति । (६-४-३७)**

'अनुनासिक—' इति लुप्तषष्ठीकं पदं वनतीतरेषां विशेषणम् । अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनुक्षणुक्षिणुऋणुतृणुघृणुवनुमनु तनोत्यादयः । हतः । घ्नन्ति ।

**२४२९ । वमोर्वा । (८-४-२३)**

उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परयोः ।

नस्यानुस्वारपरसवर्णौ । 'नेर्गद' इति णत्वम् । **अनुदात्तोपदेश** ॥ ऊदृदन्तैरित्यादिभिस्सङ्गृहीता अनुदात्तोपदेशा वनतिर्भौवादिक तनोत्यादयस्तु 'तनु विस्तारे' इत्यादिना पठिष्यन्ते । एतेषामनुनासिकस्य लोपः स्यात् झलादौ क्ङिति इति प्रतीयमानार्थः । एवं सति मुक्तमित्यादौ मुचादीनामपि मकारादिलोपः स्यात् । तत्राह । **अनुनासिक इति लुप्तषष्ठीकं पदमिति** ॥ एवमप्युक्तातिप्रसञ्जनादवस्थ्यादाह । **वनतीतरेषां विशेषणमिति** ॥ अनुदात्तोपदेशाना तनोत्यादीनाञ्चेत्यर्थः । तथाच विशेषणत्वात्तदन्तविधौ अनुनासिकान्तानामनुदात्तोपदेशानान्तनोत्यादीना वनतेश्चेत्येषामन्तस्य लोपः स्यादित्यर्थलाभान्मुक्तमित्यादौ नातिप्रसङ्गः । तदाह । **अनुनासिकान्तानामित्यादिना** ॥ वनधातोस्तु अनुनासिकान्तत्वान्न विशेषणम् । अव्यभिचारादिति भावः । अथानुदात्तोपदेशान अनुनासिकान्तान दर्शयति । **यमिरमीति** ॥ अनुदात्तोपदेशेषु एतेषामेव षण्णामनुनासिकान्तत्वादिति भावः । अथ तनोतीत्यादीननुनासिकान्तान् दर्शयति । **तनुक्षणुक्षिण्विति** ॥ मनु इत्यन्त समाहारद्वन्द्वात प्रथमैकवचनम् । एतेऽष्टौ तनोत्यादयोऽनुनासिकान्ता इत्यर्थः । 'तनु विस्तारे' इत्यारभ्य 'डु कृञ करणे' इत्यन्ता दश धातवस्तनोत्यादयः । तत्र करोतिरननुनासिकान्तत्वाभावादिह न गृह्यते । 'जनसनखनां सञ्झलोः' इति सनोतेरात्त्वस्य वक्ष्यमाणत्वात् सोऽप्यत्र न गृहीतः । 'वनु याचने' इति तनादौ पठितम् । तस्य उविकरणतया उदित्त्वेन च वनतिग्रहणेनाग्रहणात तनादौ पठितस्यापि पृथग्ग्रहणम् । तत्र तानादिकस्य वनेरुदित्त्वात् 'उदितो वा' इति क्त्वायामिड्विकल्पात् 'यस्य विभाषा' इति निष्ठायामिडभावपक्षे, वतः, वतवान्, इत्युदाहरणम् । वनतेस्तु भौवादिकस्य उदित्त्वाभावान्निष्ठायां सेट्कत्वेऽपि क्तिनि वतिरित्युदाहरणम् । 'तितुत्रतथसिसुसरकसेषु च' इति इण्निषेधादित्यलम् । **हतः इति** ॥ तसि अनुदात्तोपदेशानुनासिकान्तत्वान्नकारलोपः । 'सार्वधातुकमपित्' इति तसो ङित्त्वात् । **घ्नन्तीति** ॥ अजादिङित्परकत्वात् 'गमहन' इत्युपधालोपे 'हो हन्तेः' इति कुत्वेन हस्य घः । हसि । हथः । हथ । **वमोर्वा** ॥ 'उपसर्गादसमासेऽपि' इत्यतः उपसर्गादित्यनुवर्तते । 'रषाभ्यां नो णः' इति सूत्रमनुवर्तते । 'हन्तेरत्पूर्वस्य' इत्यतो हन्तेरिति । तदाह । **उपसर्गस्थान्निमित्तादिति** ॥ णत्वे जहा-

प्रहण्मि–प्रहन्मि । प्रहण्वः–प्रहन्वः । 'हो हन्तेः—' (सू ३५८) इति कुत्वम् । जघान । जघ्नतुः । जघ्नुः ।

## २४३० । अभ्यासाच्च । (७-३-५५)

अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ–जघन्थ । हन्ता । 'ऋद्धनोः—' (सू २३६६) इतीट् । हनिष्यति । हन्तु । हतात् । घ्नन्तु ।

## २४३१ । हन्तेर्जः । (६-४-३६)

हौ परे आभीयतया जस्यासिद्धत्वाद्धेर्न लुक् । जहि । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहनम् ।

## २४३२ । आर्धधातुके । (२-४-३५)

इत्यधिकृत्य ।

## २४३३ । हनो वध लिङि । (२-४-४२)

## २४३४ । लुङि च । (२-४-४३)

---

नेति स्थिते आह । **हो हन्तेरिति** ॥ 'अभ्यासाच्च' इत्यपेक्षया अस्यान्तरङ्गत्वेन न्याय्यत्वादिति भाव· । **जघ्नतुरिति** ॥ 'गमहन' इत्युपधालोपे 'हो हन्ते' इति कुत्वम् । थलि भारद्वाजनियमादिड्विकल्पे जहनिथ । जहन् थ, इति स्थिते ञ्णित्प्रत्ययपरत्वाभावान्नकारपरत्वाभावाच्च 'हो हन्ते' इति कुत्वाप्राप्तौ । **अभ्यासाच्च** ॥ 'हो हन्तेः' इत्यनुवर्तते । 'चजो कुघिण्ण्यतोः' इत्यत कुग्रहणञ्च । तदाह । **अभ्यासात् परस्येत्यादिना** । **जघनिथ–जघन्थेति** ॥ इडभावे नस्यानुस्वारपरसवर्णौ । जघ्नथुः । जघ्न । जघान–जघन । जघ्निव । जघ्निम । लृटि स्ये इण्निषेधमाशङ्क्याह । **ऋद्धनोरिति** ॥ हन् हि इति स्थिते 'हुझल्भ्यः' इति धित्वे प्राप्ते । **हन्तेर्जः** ॥ 'शा हौ' इत्यतः हौ इत्यनुवृत्तिमभिप्रेत्य शेषपूरणेन सूत्र व्याचष्टे । **हौ परे इति** ॥ कृते जादेशे 'अतो हेः' इति हेर्लुकमाशङ्क्य आह । **आभीयतयेति** । **जहीति** ॥ हतात् । हतम् । हत । **हनानीति** ॥ आटः पित्त्वेन ङित्त्वाभावान्नोपधालोप इति भावः । **अहन्निति** ॥ लङस्तिपि 'इतश्च' इति इकारलोपे 'सयोगान्तस्य' इति तकारलोप. । न्याय्यत्वाद्धल्ङ्यादिलोपो वा । **अहनमिति** ॥ अहन्व । अहन्म । झलादिपरकत्वाभावान्नोपधादीर्घः । विधिलिङि हन्यात् । हन्याताम् इत्यादि । आशीर्लिङि वधादेश वक्ष्यन्नाह । **आर्धधातुके इत्यधिकृत्येति** ॥ 'अदो जग्धिः' इत्यादिविधयो वक्ष्यन्ते इति शेषः । तदधिकारस्थ सूत्रमाह । **हनो वध** ॥ वधेति लुप्तप्रथमाकम् । हनो वधादेशः स्यादार्धधातुके लिङीत्यर्थः । **लुङि च** ॥

वधादेशोऽदन्तः । 'आर्धधातुके' (सू २३०७) इति विषयसप्तमी । तेनार्धधातुकोपदेशेऽकारान्तत्वात् 'अतो लोपः' (सू २३०८) । वध्यात् । वध्यास्ताम् । 'आर्धधातुके' किम् । विध्यादौ हन्यात । 'हन्तेः–' (सू ३५९) इति णत्वम् । प्रहण्यान् । अवधीत ।

अथ चत्वारः स्वरितेतः । द्विष १०१३ अप्रीतौ । द्वेष्टि–द्विष्टे । द्वेष्टा । द्वेक्ष्यति । द्वेक्ष्यते । द्वेष्टु–द्विष्टात् । द्विड्ढि । द्वेषाणि । द्वेषै । द्वेषावहै । अद्वेट् ।

## २४३५ । द्विषश्च । (३-४-११२)

लङो झेर्जुस् वा स्यात् । अद्विषुः । अद्विषन । अद्वेषम् । द्विष्यात । द्विषीत । द्विक्षीष्ट । अद्विक्षन् । दुह १०१४ प्रपूरणे । प्रपूरणं पूरणा-

हनो वधादेशः स्याल्लुडीत्यर्थः स्पष्टः । **वधादेशोऽदन्तः इति** ॥ धकारादकारो न मुखोच्चारणार्थ इति भाव । तत्प्रयोजनन्तु अनुपदमेव अवधीत् इत्यत्र वक्ष्यते । ननु आशीर्लिङि हन यादिति स्थिते आर्धधातुके परे कृतस्य वधादेशस्य आर्धधातुकोपदेशे अकारान्तत्वाभावात कथ वध्यादित्यत्र अल्लोप इत्यत आह । **विषयसप्तमीति** ॥ तथाच आर्धधातुके विवक्षिते तत्प्रवृत्तेः प्रागेव वधादेशे कृते आर्धधातुकप्रवृत्तिरिति फलितम् । ततश्च आर्धधातुकोपदेशे वधादेशस्य अकारान्तत्वादल्लोपो निर्बाधः । तदाह । **तेनेति ॥ अवधीदिति** ॥ सिचि अल्लोपे कृते वधादेशस्य धकारान्ततया एकाच्त्वेऽप्यादेशोपदेशे अनेकाच्त्वेन 'एकाच उपदेशे' इति निषेधाभावात् सिच इट् । अतो हलादेः' इति वृद्धिस्तु न भवति । 'अचः परस्मिन' इत्यल्लोपस्य स्थानिवत्त्वात् । एतदर्थमेव हि वधादेशस्य अदन्तत्वमाश्रितम् । **स्वरितेतः इति** ॥ उभयपदिन इति फलितम् । **द्विष अप्रीताविति** ॥ अनिट् । **द्वेष्टीति** ॥ पित्त्वेन ङित्त्वाभावाल्लघूपधगुण इति भावः । द्विष्टः । द्विषन्ति । द्वेक्षि । द्विष्टः । द्विष्ठ । द्वेष्मि । द्विष्वः । द्विष्मः । तङि उदाहरति । **द्विष्टे इति** ॥ ङित्त्वान्न गुणः । द्विषाते । द्विषते । द्विक्षे । द्विषाथे । द्विड्ढ्वे । द्विषे । द्विष्वहे । द्विष्महे । षढोरिति षस्य कत्वम्मत्वा आह । **द्वेक्ष्यतीति । द्विड्ढीति** ॥ हेर्धिः षस्य जश्त्वेन डः । द्विष्टात् । द्विष्टम् । द्विष्ट । **द्वेषाणीति** ॥ आटः पित्त्वेन ङित्त्वाभावात् गुणः षात्परत्वाण्णत्वम् । द्वेषाव । द्वेषाम । द्विष्टाम् । द्विषाताम् । द्विषताम् । द्विक्ष्व । द्विषाथाम् । द्विड्ढ्वम् । **द्वेषै इति** ॥ आटः पित्त्वेन ङित्त्वाभावात् गुण इति भावः । **अद्वेडिति** ॥ लङस्तिप् गुणः इकारलोपः 'वाऽवसाने' इति चर्त्वजश्त्वे इति भावः । अद्विष्टाम् । **द्विषश्च** ॥ 'झेर्जुस्' इति 'लङश्शाकटायनस्य' इति चानुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्र व्याचष्टे । **लङो झेरिति** । **अद्विषन्निति** ॥ अद्वेट् । अद्विष्टम् । अद्विष्ट । अद्वेषम् । अद्विष्व । अद्विष्म । विधिलिङि परस्मैपदे आह । **द्विष्यादिति** ॥ द्विष्याताम्, द्विष्युः, इत्यादि । तङि आह । **द्विषीतेति** ॥ द्विषीयाताम् । द्विषीरन् इत्यादि । आशीर्लिङि द्विष्यास्ताम् इत्यादि । तङ्याह । **द्विक्षीष्टेति** ॥ 'लिङ्सिचोरात्मनेपदेषु' इति कित्त्वान्न गुणः । द्विक्षीयास्तामित्यादि । लुङि परस्मैपदे आह ।

भावः । धात्वर्थम्बाधते कश्चित् । दोग्धि । दुग्धः । धोक्षि । दुग्धे । धुक्षे । धुग्ध्वे । दोग्धु । दुग्धि । दोहानि । धुक्ष्व । धुग्ध्वम् । दोहै । अधोक् । अदोहम् । अदुग्ध । अधुग्ध्वम् । अधुक्षत् । अधुक्षत । 'लुग्वा दुह—' (सू २३६५) इति लुकपक्षे तथास्ध्वम्वहिषु लङ्वदपि । दिह १०१५ उपचये । उपचयो

---

**अद्विक्षदिति** ॥ 'शल इगुपधात्' इति क्सः । अद्विक्षताम् । अद्विक्षन् इत्यादि । तङि अद्विक्षत । अद्विक्षाताम् । अद्विक्षन्त इत्यादि । अद्वेक्ष्यत् । अद्वेक्ष्यत । **दुह प्रपूरणे इति** ॥ अयमनिट् । 'पयो दोग्धि' इत्यादौ प्रकृष्टपूरणस्यार्थस्यानवगमादाह । **प्रपूरणं पूरणाभावः इति** ॥ ऊधः पूरणप्रतिकूलीभाव इत्यर्थः । ऊधसः सकाशात् क्षारणे इति यावत् । ननु प्रपूरणशब्दस्य कुतोऽयमर्थ इत्यत आह । **धात्वर्थम्बाधते कश्चिदिति** ॥ प्रसिद्ध धात्वर्थं कश्चिदुपसर्गो बाधित्वा अर्थान्तर नयतीत्यर्थः । **दोग्धीति** ॥ 'दादेः' इति हस्य घः 'झषस्तथो.' इति तकारस्य धकार. घस्य जश्त्वेन गः । एव दुग्धः इत्यपि । दुहन्ति । **धोक्षीति** ॥ हस्य घः चर्त्वेन कः षत्वमिति भावः । दुग्धः । दुग्ध । दोह्मि । दुह्व. । दुह्मः । लटि आत्मनेपदे आह । **दुग्धे इति** ॥ घधगाः । दुहाते । दुहते । **धुक्षे इति** ॥ हस्य घः दस्य भष् धकारः घस्य कः षत्वम् । दुहाथे । **धुग्ध्वे इति** ॥ हस्य घ. भष् घस्य गः । दुह्वहे । दुह्महे । दुदोह । दुदुहतुः । दुदुहुः । अजन्ताकारवत्त्वाभावात् क्रादिनियमान्नित्यमिट् । दुदोहिथ । दुदुहथु. । दुदुह । दुदोह । दुदुहिव । दुदुहिम । दुदुहे । दुदुहाते । दुदुहिरे । दुदुहिषे । दुदुहाथे । दुदुहिढ्वे–दुदुहिध्वे । दुदुहे । दुदुहिवहे । दोग्धा । धोक्ष्यति । धोक्ष्यते । **दोग्ध्विति** ॥ दुग्धात् । दुग्धाम् । दुहन्तु । **दुग्धीति** ॥ हेर्धि. घत्वजश्त्वे । दुग्धात् । दुग्धम् । दुग्ध । **दोहानीति** ॥ आट. पित्त्वादङित्त्वाद्गुण. । दोहाव । दोहाम । दुग्धाम् । दुहाताम् । दुहताम् । **धुक्ष्वेति** ॥ घत्व भष् जश्त्वचर्त्वे षत्वम् । दुहाथाम् । **धुग्ध्वमिति** ॥ हस्य घ. भष् घस्य जश्त्वम् । **दोहै इति** ॥ आट. पित्त्वादकित्त्वाद्गुण इति भाव. । दोहावहै । दोहामहै । लङि परस्मैपदे आह । **अधोगिति** ॥ तिप् इकारलोपः हल्ङ्यादिलोपः हस्य घः दस्य भष् घस्य चर्त्वविकल्प. । अदुग्धाम् । अदुहन् । अधोक् । अदुग्धम् । अदुग्ध । **अदोहमिति** ॥ अदुह्व । अदुह्म । लङस्तङयाह । **अदुग्धेति** ॥ हस्य घः तकारस्य ध घस्य गः । अदुहाताम् । अदुहत । अदुग्धा· । अदुहाथाम् । **अधुग्ध्वमिति** ॥ हस्य घः दस्य भष् घस्य ग. । अदुहि । अदुह्वहि । लुङि परस्मैपदे आह । **अधुक्षदिति** ॥ 'शल इगुपधात्' इति क्सः । हस्य घः दस्य भष् घस्य चर्त्वम् । अधुक्षताम् । अधुक्षन् इत्यादि । लुङस्तङयाह । **अधुक्षतेति** ॥ 'क्सस्याचि' अधुक्षाताम् । अधुक्षन्त । अधुक्षथाः । अधुक्षाथाम् । अधुक्षध्वम् । अधुक्षि । अधुक्षावहि । अधुक्षामहि । **लुग्वेति** ॥ त थास् ध्वम् वहि एषु चतुर्षु दन्त्यादिषु परेषु 'लुग्वा दुह' इति क्सस्य लुक्पक्षे लङीव रूपाणीत्यर्थः । तथाच अदुग्ध । अदुग्धाः । अधुग्ध्वम् । अदुह्वहि इत्यपि रूपाणीति फलितम् । अधोक्ष्यत् । अधोक्ष्यत । **दिह उपचये इति** ॥ उपचयो वृद्धिः । अनिट् । **प्रणिदेग्धीति** ॥ 'नेर्गद' इति णत्वम् ।

वृद्धिः। प्रणिदेग्धि। लिह् १०१६ आस्वादने। लेढि। लीढः। लिहन्ति। लेक्षि। लीढे। लिक्षे। लीढ्वे। लेढु। लीढाम। लीढि। लेहानि। अलेट्। अलिक्षन्। अलिक्षत। अलिक्षताम्। अलीढ। अलिक्षावहि। अलिह्वहि। अलेक्ष्यन्। अलेक्ष्यत। चक्षिङ् १०१७ व्यक्तायां वाचि। अयं दर्शनेऽपि। इकारोऽनुदात्तो युजर्थः। 'विचक्षणः प्रथयन्'। नुम् तु न। 'अन्ते इदितः' इति व्याख्यानात्। ङकारस्तु 'अनुदा-

दुहधातुवद्रूपाणि। **लिह आस्वादने इति** ॥ अनिट्। **लेढीति** ॥ शपो लुकि ढत्वधत्वष्टुत्वढलोपाः। **लेक्षीति** ॥ सिपि हस्य ढः 'षढोः' इति ढस्य कः इति भावः। लीढः। लीढ। लेह्मि। लिह्वः। लिह्मः। लटि तङ्याह। **लीढे इति** ॥ लिहाते। लिहते। **लिक्षे इति** ॥ ढकषाः। लिहाथे इति सुगमम्। **लीढ्वे इति** ॥ ढत्वधत्वष्टुत्वढलोपदीर्घाः। लिहे। लिह्वहे। लिह्महे। लेढा। लेक्ष्यति। लेक्ष्यते। **लेढ्विति** ॥ लीढात्। लीढाम्। लिहन्तु। **लीढीति** ॥ हेर्धिः ढत्वधत्वष्टुत्वढलोपदीर्घाः। लीढात्। लीढम्। लीढ। **लेहानीति** ॥ आटः पित्त्वेन ङित्त्वाभावाद्गुण इति भावः। लेहाव। लेहाम। लीढाम्। लिहाताम्। लिहताम्। लिक्ष्व। लिहाथाम्। लीढ्वम्। लेहै। लेहावहै। लेहामहै। **अलेडिति** ॥ लङि तिपि शपो लुकि इकारलोपे हल्ङ्यादिलोपे हस्य ढः चर्त्वविकल्प इति भावः। अलीढाम्। अलिहन्। अलेट्। अलीढम्। अलीढ। अलेहम्। अलिह्व। अलिह्म। अलीढ। अलिहाताम्। अलिहत। अलीढा। अलिहाथाम्। अलीढ्वम्। अलिहि। अलिह्वहि। अलिह्महि। **अलिक्षदिति** ॥ लुङि क्सः। अलिक्षताम्। अलिक्षन्। अलिक्षः इत्यादि। तङि आह। **अलिक्षतेति। अलीढेति** ॥ 'लुग्वा दुह' इति क्सलोपपक्षे रूपम्। अलिक्षाताम्। अलिक्षन्त। अलिक्षथा—अलीढाः। अलिक्षाथाम्। अलिक्षध्वम्—अलीढ्वम्। अलिक्षि। 'लुग्वा दुह' इति लुग्विकल्पम्मत्वा आह। **अलिक्षावहि। अलिह्वहीति** ॥ **अलेक्ष्यत्। अलेक्ष्यतेति** ॥ द्विषादयश्चत्वारः स्वरितेतो गताः। **चक्षिङ् व्यक्तायां वाचीति** ॥ गूढार्थस्य स्पष्टप्रतिपत्त्यर्थे विवरणे इत्यर्थः। **अयं दर्शनेऽपीति** ॥ श्रुतौ "पूर्वापरञ्चरतो माययैतौ। शिशू क्रीडन्तौ परियातो अध्वरम्। विश्वान्यन्यो भुवनाभिचष्टे। ऋतूनन्यो विदधज्जायते पुनः" इत्यादौ तथा दर्शनादिति भावः। ननु चक्षिङित्यत्र इकारोच्चारणं व्यर्थं न च सुखोच्चारणार्थमिति वाच्यम्। अकारोच्चारणेनैव तत्सिद्धेः। नाप्यनुदात्तेत्त्वप्रयुक्तात्मनेपदार्थं तदिति शक्यं वक्तुम्। ङित्त्वादेव तत्सिद्धेरित्यत आह। **इकारोऽनुदात्तो युजर्थः इति** ॥ 'अनुदात्तेतश्च हलादेः' इति ल्युडपवादयुच्प्रत्ययार्थं इत्यर्थः। अकारमुल्लङ्घ्य इकारोच्चारणन्तु उच्चारणार्थत्वाभावप्रतिपत्त्यर्थमिति भावः। "विचक्षणः प्रथयन्" इति मन्त्रः। अत्र लित्स्वरनिवृत्तये युच्प्रत्यय इति भावः। ननु युच्प्रत्ययार्थमिकारस्य इत्सञ्ज्ञावश्यकत्वे नुमागमः स्यादित्यत आह। **नुम् तु नेति** ॥ कुत इत्यत आह। **अन्ते इदितः इति** ॥ 'इदितो नुम् धातोः' इत्यत्र 'गोः पदान्ते' इत्यस्मादन्ते इत्यनुवृत्तेरिति भावः। नन्विकारे युजर्थम् अनुदात्तत्वस्य इत्सञ्ज्ञकत्वस्य च आवश्यकत्वे तत एवात्मनेपदसम्भवात् ङकारोच्चारणं व्यर्थमित्याशङ्क्य आह। **ङकारस्त्विति** ॥

